जङ्घान्तपीवरकटीरतटीनिबद्ध-
　　व्यालोलकिङ्किणिघटारणितै रटद्भिः ।
मुग्धैस्तरक्षुनखकल्पितकण्ठभूषै-
　　रव्यक्तमञ्जुवचनैः पृथुकैः परीतम् ॥ २२ ॥

अथ सुललितगोपसुन्दरीणां
　　पृथु( निविवीष ? विनिवेश )नितम्ब[1]मन्थराणाम् ।
गुरुकुचभरभङ्गुरावलग्न-
　　त्रिवलिविजृम्भितरोमराजिभाजाम् ॥ २३ ॥

तदतिरुचिरचारुवेणुवाद्या-
　　मृतरसपल्लविताङ्गजाङ्घ्रिपस्य ।
मुकुलविसररम्यरूढरोमो-
　　द्गमसमलङ्कृतगात्रवल्लरीणाम् ॥ २४ ॥

उदितरुचिरहास( पूर्ण )चन्द्रा-
　　तपपरिजृम्भितरागवारिराशेः ।
तरलतरतरङ्गभङ्गविप्रुद्-
　　प्रकरसमश्रमबिन्दुसंततानाम् ॥ २५ ॥

तदतिरुचिरमन्दचिल्लिचाप-
　　च्युतनिशितेक्षणमारबाणवृष्ट्या ।
दलितसकलमर्मविह्वलाङ्ग-
　　परिसृतदुःसहवेपथुव्यथानाम् ॥ २६ ॥

तदतिसुभगकम्ररूपशोभा-
　　मृतरसपानविधानलालसानाम् ।
प्रणयसलिलपूरवाहिनीना-
　　मलसविलोलविलोचनाम्बुजानाम् ॥ २७ ॥

---

१ 'म्ब भार' क. पाठः ।

विस्रंसत्कवरीकलापविगलत्फुल्लप्रसूनस्रवन्-
माध्वीलम्पटचञ्चरीकघटया संसेवितानां मुहुः ।
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युच्छ्वसन्-
नीवीविश्लथमानचीनसिचयान्ताविर्नितम्बत्विषाम् ॥ २८॥

स्खलितललितपादाम्भोजमन्दाभिघात-
क्वणितमणितुलाकोट्याकुलाशामुखानाम् ।
चलदधरदलानां कुड्मल(त्)पक्ष्मलाक्षि-
द्वयसरसिरुहाणामुल्लसत्कुण्डलानाम् ॥ २९ ॥

द्राघिष्ठश्वसनसमीरणाभिताप-
प्रम्लानीभवदरुणोष्ठपल्लवानाम् ।
नानोपायनविलसत्कराम्बुजाना-
मालीभिः सततनिषेवितं समन्तात् ॥ ३० ॥

तासामायतलोलनीलनयनव्याकोषनीलोत्पल-
स्रग्भिः संपरिपूरिताखिलतनुं नानाविलासास्पदम् ।
तन्मुग्धाननपङ्कजप्रविलसन्माध्वीरसास्वादिनीं
बिभ्राणं प्र(ल?ण)योन्मदाक्षिमधुकृन्मालां मनोहारिणीम् ॥ ३१ ॥

गोपीगोपपशूनां बहिः स्मरेदग्रतोऽस्य गीर्वाणघटाम् ।
वित्तार्थिनीं विरिञ्चित्रिनयनशतमन्युपूर्विकां स्तोत्रपराम् ॥ ३२ ॥

तद्वद् दक्षिणतो मुनिनिकरं वसुधर्मवाञ्छयाम्नायपरम् ।
योगीन्द्रनाथपृष्ठे मुमुक्षमाणान् समाधिस्थान् सनकाद्यान् ॥ ३३ ॥

सव्ये सकान्तानथ यक्षसिद्ध-
गन्धर्वविद्याधरचारणांश्च ।
सकिन्नरानप्सरसश्च मुख्यान्
कामार्थिनो नर्तितगीतवाद्यैः ॥ ३४ ॥

शङ्खेन्दुकुन्दधवलं सकलागमज्ञं
सौदामिनीततिपिशङ्गजटाकलापम् ।
तत्पादपङ्कजगतामचलां च भक्तिं
वाञ्छन्तमुज्झिततरान्यसमस्तसङ्गम् ॥ ३५ ॥

नानाविधश्रुतिगुणान्वितसप्तराग-
ग्रामत्रयीगतमनोहरमूर्च्छनाभिः ।
संप्रीणयन्तमुदिताभिरमुं महत्या
संचिन्तयेन्नभसि धातृसुतं मुनीन्द्रम् ॥ ३६ ॥

इति ध्यात्वात्मानं पटुविशदधीर्नन्दतनयं
पुरो बुद्ध्यैवार्घ्यप्रभृतिभिरनिन्द्योपहृतिभिः ।
यजेद्भूयो भक्त्या स्ववपुषि बहिष्ठैश्च विभवै-
र्विधानं तद्ब्रूमो वयमतुलसांनिध्यदमथ ॥ ३७ ॥

आरचय्य भुवि गोमयाम्भसा
स्थण्डिलं निजममुत्र विष्टरम् ।
न्यस्य तत्र विहितास्पदोऽम्भसा
शङ्खमस्त्रमनुना विशोधयेत् ॥ ३८ ॥

तत्र गन्धसुमनोऽक्षतानथो
निक्षिपेद् हृदयमन्त्रमुच्चरन् ।
पूरयेद्विमलपाथसा सुधी-
रक्षरैः प्रतिगतैः शिरोन्तिकैः ॥ ३९ ॥

पीठशङ्खसलिलेषु मन्त्रविद्-
वह्निवासरनिशाकृतां क्रमात् ।
मण्डलानि विषक(श्रवो? ध्रुवा)क्षरै-
रर्चयेद्वदनपूर्वदीपितैः ॥ ४० ॥

तत्र तीर्थमनुनाभिवाहयेत्
तीर्थमुष्णरुचिमण्डलात् पुनः ।
स्वीयहृत्कमलतो हरिं तथा
गालिनीं च शिखया प्रदर्शयेत् ॥ ४१ ॥

तज्जलं नयनमन्त्रवीक्षितं
वर्मणा समवगुण्ठ्य दोर्युजा ।
मूलमन्त्रसकलीकृतं न्यसे-
दङ्गकैश्च कलयेद् दिशोऽस्त्रतः ॥ ४२ ॥

अक्षतादियुतमच्युतीकृतं
संस्पृशञ्जपतु मन्त्रमष्टधा ।
किंचन क्षिपतु वार्द्धनीजले
प्रोक्षयेन्निजतनुं ततोऽमुना ॥ ४३ ॥

त्रिः करेण मनुनाखिलं तथा
साधनं कुसुमचन्दनादिकम् ।
शङ्खपूरणविधिः समीरितो
गुप्त एष यजनाग्रणीरिह ॥ ४४ ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धो कावेरि जलेऽस्मिन् संनिधिं कुरु ॥ ४५ ॥

एष तीर्थमनुः प्रोक्तो दुरितौघनिवारणः ।
कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ॥ ४६ ॥

तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥ ४७ ॥

अथ मूर्द्धनि मूलचक्रमध्ये
निजनाथान् गणनायकं समर्च्य ।

न्यसनक्रमतश्च पीठमन्त्रै-
जैलगन्धाक्षतपुष्पधूपदीपैः ॥ ४८ ॥

प्रयजेदथ मूलमन्त्रतेजो
निजमूले हृदये भ्रुवोश्च मध्ये ।
त्रितयं स्मरतः स्मरेत्तदेकी-
कृतमानन्दघनं तडिल्लताभम् ॥ ४६ ॥

तत्तेजोङ्गैः सावयवीकृत्य विभूत्या-
ङ्गान्तं विन्यस्य यजेदासनपूर्वैः ।
भूषान्तैर्भूयो जलगन्धादिभिरर्चां
कुर्याद्भूत्याद्यङ्गविधानावधि मन्त्री ॥ ५० ॥

भूयो वेणुं वदनस्थं वक्षोदेशे च वनमालाम् ।
वक्षोजोर्ध्वं प्रयजेच्च श्रीवत्सं कौस्तुभं रत्नम् ॥ ५१ ॥

श्रीखण्डनिःस्यन्दविचर्चिताङ्गो
मूलेन भालादिषु चित्रकाणि ।
लिख्यादथो पञ्जरमूर्तिमन्त्रै-
रनामया दीपशिखाकृतीनि ॥ ५२ ॥

पुष्पाञ्जलिं वितनुयादथ पञ्चकृत्वो
मूलेन पादयुगले तुलसीद्वयेन ।
मध्ये हयारियुगलेन च मूर्ध्नि पद्म-
द्वन्द्वेन षड्भिरपि सर्वतनौ च सर्वैः ॥ ५३ ॥

श्वेतानि दक्षभागे सितचन्दनपङ्किलानि कुसुमानि ।
रक्तानि वामभागेऽरुणचन्दनपङ्कसिक्तानि ॥ ५४ ॥

तद्वच्च दीपधूपौ समर्प्य धिनुयात् सुधारसैः कृष्णम् ।
मुखवासं दत्त्वा समर्चयेत् सुगन्धिपुष्पाद्यैः ॥ ५५ ॥

ताम्बूलगीतनृत्यवाद्यैः संतोष्य चु[1]लुकसलिलेन ।
ब्रह्मार्पणाख्यमनुना कुर्यात् स्वात्मार्पणं मन्त्री ॥ ५६ ॥

अथवा संकुचितधियामयं विधिर्मूर्तिपञ्जरारब्धः ।
यद्यष्टादशलिपिना स्वार्णपदाङ्गैर्वेणुपूर्वैः प्रोक्तः ॥ ५७ ॥

सुप्रसन्नमथ नन्दतनूजं
भावयञ्जपतु मन्त्रमनन्यः ।
सार्थसंस्मृति यथाविधिसंख्या-
पूरणे सुयमनं विदधीत ॥ ५८ ॥

प्रणवपुटितं बीजं जप्त्वा शतं सहिताष्टकं
निजगुरुमुखादाप्तान् योगान् युनक्तु महामतिः ।
सदमृतचिदानन्दात्माथो जपं (च) समर्पये-
दिति जपविधिः सम्यक्प्रोक्तो मनुद्वितयाश्रितः ॥ ५९ ॥

य इदं जपते विधि (व) न्नरो
भवितासौ दयितः शरीरिणाम् ।
अपि वाक्कमलैकमन्दिरं
परमन्ते समुपैति तन्महः ॥ ६० ॥

इति श्रीक्रमदीपिकायां (ध्यानादिपूजाविधाननिरूपणं नाम)
तृतीयः पटलः सम्पूर्णः ॥ ३ ॥

---

१ 'चुल्लुक' क. पाठः ।

अथ

# चतुर्थः पटलः।

कथ्यते(ऽत्र)खलु मन्त्रवर्य्ययोः
साधनं सकलसिद्धिसाधनम् ।
यद्विधाय मुनयो महीयसीं
सिद्धिमीयुरिह नारदादयः ॥ १ ॥

विप्रं प्रध्वस्तकामप्रभृतिरिपुघटं निर्मलाङ्गं गिरिष्ठां
भक्तिं कृष्णाङ्घ्रिपङ्केरुहयुगलरजोरागिणीमुद्वहन्तम् ।
वेत्तारं वेदशास्त्रागमविमलपथां संमतं सत्सु दान्तं
विद्यां यः संविवित्सुः प्रणवतनुमना देशिकं संश्रयेत ॥ २ ॥

संतोषयेदकुटिलार्द्रतरान्तरात्मा
तं स्वैर्धनैश्च वपुषाप्यनुकूलवाण्या ।
अब्दत्रयं कमलनाभधियातिधीर-
स्तुष्टयै विवक्षतु[1] गुरावथ मन्त्रदीक्षाम् ॥ ३ ॥

प्रपञ्चसारप्रथिता तु दीक्षा
संस्मार्यते संप्रति सर्वसिद्ध्यै ।
ऋते यया संततजापिनोऽपि
सिद्धिं न यद् दास्यति मन्त्रपूगः ॥ ४ ॥

अथ पुरो विदधीत भुवःस्थली-
मधि यथाविधि वास्तुबलिं बुधः ।
अचलदोर्मितमत्र तु मण्डपं
मसृणवेदिकमारचयेत् ततः ॥ ५ ॥

---

१ 'ति' क. पाठः ।

त्रिगुणतन्तुयुजा कुशमालया
परिवृतं प्रकृतिध्वजभूषितम् ।
मुखचतुष्कपयस्तरुतोरणं
सितवितानविराजितमुज्ज्वलम् ॥ ६ ॥

वसुत्रिगुणिताङ्गुलिप्रमितखाततारायतं
वसोर्वसुपतेरथो ककुभि धिष्ण्यमस्मिन् बुधः ।
करोतु वसुमेखलं वसुगणार्द्धकोणं प्रती-
च्यवस्थितग(दा ? जा)धरप्रमितयोनिसंलक्षितम् ॥ ७ ॥

ततो मण्डपे गव्यगन्धाम्बुसिक्ते
लिखेन्मण्डलं सम्यगष्टच्छदाब्जम् ।
सवृत्तत्रयं राशिपीठाङ्घ्रिवीथी-
चतुर्द्वारशोभोपशोभाश्रियुक्तम् ॥ ८ ॥

ततो देशिकः स्नानपूर्वं विधानं
विधायात्मपूजावसानं विधिज्ञः ।
स्ववामाग्रतः शङ्खमप्यर्घ्यपाद्या-
च[1]माद्यानि पात्राणि संपूरितानि ॥ ९ ॥

विधायान्यतः पुष्पगन्धाक्षताद्यं
करक्षालने पृष्ठतश्चापि पात्रम् ।
प्रदीपावलीदीपिते सर्वमन्यत्
स्वदृग्गोचरे साधनं चादधीत ॥ १० ॥

वायव्यादीशानपर्यन्तमर्च्या
पीठस्योदग्गौरवी पङ्क्तिरादौ ।
पूज्योऽन्यत्राप्याम्बिकेयः कराब्जैः
पाशं दन्तं सृण्यभीती दधानः ॥ ११ ॥

---

१ 'चमनीयानि' क. पाठः ।

आराध्याधारशक्त्याद्यमरचरणपावध्यथो मध्यभागे
धर्मादीन् वह्निरक्षःपवनशिवगतान् दिक्ष्वधर्मादिकांश्च ।
मध्ये शेषाब्जबिम्बत्रितयगुणगणात्मव्रजं केसराणां
मध्ये मध्ये च शक्तीर्नव समभियजेत् पीठमन्त्रेण भूयः ॥ १२ ॥

ततः शालीन् मध्येकमलममलांस्तण्डुलवरा-
नपि न्यसेद् दर्भांस्तदुपरि च कूर्चाक्षतयुतान् ।
न्यसेत् प्रादक्षिण्यात् तदुपरि कृशानोर्दश कला
यकाराद्यर्णाद्या यजतु च सुगन्धादिभिरिमाः ॥ १३ ॥

न्यसेत् कुम्भं तत्र त्रिगुणितलसत्तन्तुकलितं
जपंस्तारं धूपैः सुपरिमिलितं जोङ्गकमयैः ।
कभाद्यैः कुम्भेऽस्मिन् ठडवसितिभिर्वर्णयुगलै-
स्तथा न्यस्याभ्यर्च्यास्तदनु खमणेर्द्वादश कलाः ॥ १४ ॥

एवं संकल्प्याग्निमाधाररूपं
भानुं तद्वत्कुम्भरूपं विधिज्ञः ।
न्यसेत् तस्मिन्नक्षताद्यैः समेतं
कूर्चं स्वर्णं रत्नवर्य्यैः प्रदीप्तम् ॥ १५ ॥

अथ क्षाथतोयैः क्षकारादिवर्णै-
रकारावसानैः समापूरयेत्तम् ।
स्वमन्त्रत्रिजापावसानं पयोभि-
र्गवां पञ्चगव्यैर्जलैः केवलैर्वा ॥ १६ ॥

कलशजलेऽस्मिन् वसुयुगसंख्याः
स्वरगणपूर्वा न्यसतु तथैव ।
उडुपकलास्ताः सलिलसुगन्धा-
क्षतसुमनोभिस्तदनु यजेच्च ॥ १७ ॥

उदिच्यकुष्ठकुङ्कुमाम्बुलोहसज्जटामुरैः ।
उशीरमित्युदीरितं हरेः प्रियाष्टगन्धकम् ॥ १८ ॥

क्वाथतोयपरिपूरितोदरे
संविलोड्य विधिनाष्टगन्धकम् ।
सोमसूर्यशिखिनां कलाः पृथक्-
सेवकर्म(?)विनियोजयेत् क्रमात् ॥ १६ ॥

तत्तदाक्षरभवास्तु कादिभि-
ष्टादिभिः पुनरुकारजाः कलाः ।
पादिभिर्मलिपिजास्तु बिन्दुजाः
षादिभिः स्वरगणेन नादजाः ॥ २० ॥

समावाहनान्ते सुसंस्थापनात् प्रा-
गृचस्तत्र तत्राभिजप्या बुधेन ।
समभ्यर्च्य तास्ताः पृथक् तच्च पाथो-
ऽर्पयेन्मूलमन्त्रेण कुम्भे यथावत् ॥ २१ ॥

सहकारबोधिपनसस्तबकैः
शतमन्युवल्लिकलितैः कलशम् ।
पिदधातु पुष्पफलतण्डुलकै-
रभिपूर्णया च शुभचक्रिकया ॥ २२ ॥

अभिवेष्टयेत् तदनु कुम्भमुखं
नवनिर्मलांशुकयुगेन बुधः ।
समलंकृतेऽत्र कुसुमादिभिर-
प्यभिवाहयेत् परतरं च महः ॥ २३ ॥

सकलीविधाय कलशस्थममुं
हरिमर्णतत्त्वमनुविन्यसनैः ।

परिपूजयेद् गुरुरथावहितः
परिवारयुक्तमुपचारगणैः ॥ २४ ॥

दत्त्वासनं स्वागतमप्युदीर्य
तथार्घ्यपाद्याचमनीयकानि ।
देयानि पूर्वं मधुपर्कयुञ्जि
नन्दात्मजायाचमनान्तिकानि ॥ २५ ॥

स्नानं च वासश्च विभूषणानि
साङ्गाय तस्मै विनियोज्य मन्त्री ।
गात्रे पवित्रैरथ गन्धपुष्पैः
पूर्वं यजेन्न्यासविधानतोऽस्य ॥ २६ ॥

सृष्टिस्थिती स्वाङ्गयुगं च वेणुं
मालामभिज्ञानवराश्वमुख्यौ ।
मूलेन चात्मार्चनवत्प्रपू(र्य ? ज्य)
समर्चयेदावरणानि भूयः ॥ २७ ॥

दिक्ष्वथ दामसुदामौ वसुदामः किङ्किणी च संपूज्या ।
तेजोरूपास्तद्वद्बहिरङ्गानि च केसरेषु समभियजेत् ॥ २८ ॥

हुतवहनिर्ऋतिसमीरणशिवदिक्षु हृदयादिवर्मपर्यन्तम् ।
पूर्वादिदिक्ष्वतोऽस्त्रं क्रमेण गन्धादिभिश्च शुद्धमनाः ॥ २९ ॥

मुक्तेन्दुकान्तकुवलयहरिनीलहुताशसमप्रभाः प्रमदाः ।
अभयवरस्फुरितकराः प्रधानतनवोऽङ्गदेवताः सर्य्याः ॥ ३० ॥

रुक्मिण्याद्या महिषीरष्टौ संपूजयेद् दलेषु ततः ।
दक्षिणकरधृतकमला वसुपूरितसुपात्रमुद्रितान्यकराः ॥ ३१ ॥

रुक्मिण्याख्या सत्या सनाग्निजित्याह्वया सुनन्दा च ।
भूयश्च मित्रबिन्दा सुलक्ष्मणा ऋक्षजा सुशीला च ॥ ३२ ॥

तपनीयमारकताभाः सुसितविचित्राम्बरा दिशश्चैताः ।
पृथुकुचभरालसाङ्ग्यो विविधमणिप्रकरविलसिताभरणाः ॥ ३३ ॥

ततो यजेद् दलाग्रेषु वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च बलभद्रं सुभद्रिकाम् ॥ ३४ ॥

गोपान् गोपीश्च गोविन्दविलीनमतिलोचनाः ।
ज्ञानमुद्राभयकरौ पितरौ पीतपाण्डुरौ ॥ ३५ ॥

दिव्यमाल्याम्बरालेपभूषणे मातरौ पुनः ।
धारयन्त्यौ च वरदं पायसापूर्णपात्रकम् ॥ ३६ ॥

अरुणश्यामले हारमणिकुण्डलमण्डिते ।
बलः शङ्खेन्दुधवलो मुसलं लाङ्गलं दधत् ॥ ३७ ॥

हालालोलो नीलवासा हेलावानेककुण्डलः ।
कलायश्यामला भद्रा सुभद्रा भद्रभूषणा ॥ ३८ ॥

वराभययुता पीतवसना रूढयौवनाः ।
वीणुवेणावेत्रयष्टिशङ्खश्रृङ्गादिपाणयः ॥ ३९ ॥

गोपा गोप्यश्च विविधोपायनात्तकराम्बुजाः ।
मन्दारादींश्च तद्बाह्ये पूजयेत्कल्पपादपान् ॥ ४० ॥

मन्दारसंतानकपारिजात-
कल्पद्रुमाख्यान् हरिचन्दनं च ।
मध्ये चतुर्दिक्ष्वपि वाञ्छितार्थ-
दानैकदक्षान् फलनम्रशाखान् ॥ ४१ ॥

हरिहव्यवाहतरणिजक्षपाडपा-
म्पतिवायुसोमशिवशेषपद्मजान् ।
प्र[1]यजेत् स्वादिक्ष्वमलधीः स्वजात्यधी
श्वरहेतिपत्रपरिवारसंयुतम् ॥ ४२ ॥

---

१ 'पूजयेत्' क. पाठः ।

कपिशकपिलनीलश्यामलश्वेतधूम्रा-
मलसितशुचिरक्ता वर्णतो वासवाद्याः ।
करकमलविराजत्स्वायुधा दिव्यवेशा
विविधमणिगणौघप्रस्फुरद्भूषणाढ्याः ॥ ४३ ॥

दम्भोलिशक्त्यभिधदण्डकृपाणपाश-
चण्डाङ्कुशाह्वयगदात्रिशिखारिपद्माः ।
अर्च्या बहिर्निजसुलक्षितमौलियुक्ताः
स्वस्वायुधाभयसमुद्यतपाणिपद्माः ॥ ४४ ॥

कनकरजततोयदाभ्रशम्पा-
रुणहिमनीलज( वा ? पा )प्रवालभासः ।
क्रमत इह रुचा तु वज्रपूर्वा
रुचिरविलेपनवस्त्रमाल्यभूषाः ॥ ४५ ॥

कथितमावृतिसप्तकमच्युता-
र्चनविधाविति सर्वसुखावहम् ।
प्रयजतादथ वाङ्गपुरन्दरा-
शनिमुखैस्त्रितयावरणं त्विदम् ॥ ४६ ॥

इत्यर्चयित्वा जलपुष्पगन्धैः
कृष्णाष्टकेनाप्यथ कृष्णपूजाम् ।
कुर्याद् बुधस्तानि समाह्वयानि
वक्ष्यामि तारादिनमोन्तिकानि ॥ ४७ ॥

श्रीकृष्णो वासुदेवश्च नारायणसमाह्वयः ।
देवकीनन्दनयदुश्रेष्ठौ वार्ष्णेय इत्यपि ॥ ४८ ॥

असुराक्रान्तशब्दान्ते भारहारीति सप्तमः ।
धर्मसंस्थापकश्चाष्टौ चतुर्थ्यन्ताः क्रमादिमे ॥ ४९ ॥

एभिरेवाथवा पूजा कर्तव्या कंसवैरिणः ।
संसारसागरोत्तीर्णैः सर्वकामाप्तये बुधैः ॥ ५० ॥

साराङ्गारे घृतविलुलितैर्जर्जरैः संविकीर्णैः
गुग्गूलाद्यैर्घनपरिमलं धूपमापाद्य मन्त्री ।
दद्यान्नीचैर्दनुजमथनायापरेणाथ दोष्णा
घण्टां गन्धाक्षतकुसुमकैरर्चितां वादमानः ॥ ५१ ॥

उद्यद्दीप्तिं सुरभिघृतसंसिक्तकर्पूरवर्त्या
दीपं दृष्ट्वाद्यतिविशदधीः पादपर्यन्तमुच्चैः ।
दत्त्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्य-
माचामं कल्प[1]यतु विमलं स्वर्णपात्रे निवेद्यम् ॥ ५२ ॥

सुरभितरेण दुग्धहविषा सुश्रृतेन सिता-
समुपदंशकै रुचिरहृद्यविचित्ररसैः ।
दधिनवनीतनूतनसितोपलपूपलिका-
घृतगुडनारिकेलकदलीफलपुष्परसैः ॥ ५३ ॥

अस्त्रोक्षितं तदरिमुद्रिकयाभिरक्ष्य
वायव्यतो[2]थ परिशोषितमग्निदोष्णा ।
संदह्य वामकरसौधरसाभिपूर्णं
मन्त्रामृतीकृतमथाभिमृशन् प्रजप्यात् ॥ ५४ ॥

मनुमष्टशः सुरभिमुद्रिकया
परिपूर्णमर्चयतु गन्धमुखैः ।
हरिमर्चयेदथ कृतप्रसवा-
ञ्जलिरास्यतोऽस्य विसरच्च महः ॥ ५५ ॥

वीतिहोत्रदयितान्तमुच्चरन्
मूलमन्त्रमथ निक्षिपेज्जलम् ।

---

१ 'येत्तद्विमलमतिरथो' क. पाठः । २ 'म' क. पाठः ।

अर्पयेत्(त)दमृतात्मकं हवि-
दोर्युजा सकुसुमं समुद्धरन् ॥ ५६ ॥

निवेदयामि भवते जुषाणेदं हविर्हरे ।
निवेद्यार्पणमन्त्रोऽयं सर्वार्चासु निजाख्यया ॥ ५७ ॥

ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन् दक्षिणेन प्राणादीनां च दर्शयेत् ॥ ५८ ॥

स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे
स्वाङ्गुष्ठमूर्ध्ना प्रथ(मे ? मा)तु मुद्रा ।
तथापरा तर्जनिमध्यमे स्या-
दनामिकामध्यमिके च मध्या ॥ ५९ ॥

अनामिकातर्जनिमध्यमा स्यात्
तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात्पञ्चमी तद्वदिति प्रदिष्टा
प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥ ६० ॥

प्राणापानव्यानोदानसमानाः क्रमाच्चतुर्थ्या युक्ताः ।
ताराद्या वध्वन्ताः कृष्णाध्वनस्तत्र ते मनवः ॥ ६१ ॥

ततो निबध्य मुद्रिकां प्रधानया करद्वये ।
स्पृशन्ननामिकां निजं मनुं जपन् प्रदर्शयेत् ॥ ६२ ॥

(नन्द ? चन्द्र)जोऽम्बुमनुबिन्दुयुङ् नतिः
पार्श्वरा मरुद(वात्मने ? थोऽग्नी)ति च ।
रुद्धडेयुतनिवेद्यमात्मभू-
र्मांसपार्श्वमनिलस्तथा(सि ? मि)युक् ॥ ६३ ॥

मण्डलमभितो मन्त्री बीजाङ्कुरभाजनानि विन्यस्य ।
पिष्टमयानपि दीपान् घृतपूर्णान् विन्यसेत्सुदीप्तशिखान् ॥ ६४ ॥

अथ संस्कृते हुतवहेऽमलधी-
रभिवाद्य सम्यगभिपूज्य हरिम् ।
जुहुयात् सिताघृतयुतेन पयः-
परिसाधितेन सितदीधितिना ॥ ६५ ॥

अष्टोत्तरं सहस्रं होमं समाप्य पुनर्बलिं दद्यात् ।
राशिष्वधिनाथेभ्यो नक्षत्रेभ्यस्ततश्च करणेभ्यः ॥ ६६ ॥

संपाद्य पानीयसुधां समर्प्य
दत्त्वाम्भ उद्वास्य मुखार्चिरास्ये ।
नैवेद्यमुद्धृत्य निवेद्य विष्वक्-
सेनाय पृथ्वीमुपलिप्य भूयः ॥ ६७ ॥

गण्डूषदन्तपवनाचमनास्यहस्त-
मृज्यानुलेपमुखवासकमाल्यभूषाः ।
ताम्बूलमप्यभिसमर्प्य सुवाद्यनृत्य-
गीतैः सुतृप्तमभिपूजयतात् पुरेव ॥ ६८ ॥

गन्धादिभिः सपरिवारमथार्घ्यमस्मै
दत्त्वा विधाय कुसुमाञ्जलिमादरेण ।
स्तुत्वा प्रणम्य शिरसा चुलुकोदकेन
स्वात्मानमर्पयतु तच्चरणाब्जमूले ॥ ६९ ॥

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ।

मां मदीयं च सकलं हरये सम्यगर्पये ।
ओंतत्सदिति च प्रोक्तो मन्त्रः स्वात्मसमर्पणे ॥ ७० ॥

अनुस्मरन् कलशगमच्युतं जपेत्
सहस्रकं मनुमथ साष्टकं बुधः ।

वपुष्यथो दितिजजितः समावृती-
र्विलाप्य तास्तदपि नयेत् स्वधामताम् ॥ ७१ ॥

ध्वजतोरणदिक्कल(सा ? शा)धिगता-
मपि मण्डलमण्डपकुण्डगताम् ।
अभियोज्य चितिं कलशे कुसुमैः
परिपूज्य जपेन्मनुमष्टशतम् ॥ ७२ ॥

अथ शिष्य उपोषितः प्रभाते
कृतनैत्यः सुसिताम्बरः सुवेशः ।
धरणीधनधान्यगोदुकूलै-
र्धिनुयाद्द्विप्रवरान् हरेः प्रतृप्त्यै ॥ ७३ ॥

भूयः परीत्य प्रणिपत्य देशिकं
तस्मै परस्मै पुरुषाय देहिने ।
तां वित्तशाठ्यं परिहृत्य दक्षिणां
दत्त्वा तनुं स्वां च समर्पयेत् सुधीः ॥ ७४ ॥

अथाभिषेकमण्डपे सुखोपविष्टमासने ।
गुरुर्विशोधयेदमुं पुरैव शोषणादिभिः ॥ ७५ ॥

पीठन्यासावसानं वपुषि विमलधीर्न्यस्य तस्यासिकायां
मन्त्रेणाभ्यर्च्य दूर्वाक्षतकुसुमयुतां रोचनां के निधाय ।
आशीर्वादैर्द्विजानां पटुविशदरवैर्गीतवादित्रघोषै-
र्माङ्गल्यैरानयेत्तं कलशमभिवृतस्तत्समीपं प्रतीतः ॥ ७६ ॥

तेनाभिनीलमणिरत्नमहौषधेन
धाम्ना परेण परमामृतरूपभाजा ।
संपूरयन् वपुरमुष्य ततो वितन्वं-
स्तत्सामरस्यमभिषेचयताद्यथावत् ॥ ७७ ॥

क्षाद्यैरान्तैर्वर्णैरभिपूर्णतनुस्त्रिरुक्तमन्त्रार्णैः ।
परिधृतसिततरवसनद्वितयो वाचंयमः समाचान्तः ॥ ७८ ॥

बहुशः प्रणम्य देशिकनामानं हरिमथोपसंगृह्य ।
तद्दक्षिणत उपास्तामभिमुख एकाग्रमानसः शिष्यः ॥ ७९ ॥

न्यासैर्यथाविधि तमच्युतसाद्विधाय
गन्धाक्षतादिभिरलङ्कृतवर्मणोऽस्य ।
ऋष्यादियुक्तमथ मन्त्रवरं यथावद्
ब्रूयात् त्रिशो गुरुरनर्घ्यमवामकर्णे ॥ ८० ॥

गुरुणा विधिवत् प्रसाधितं
मनुमष्टोर्ध्वशतं प्रजप्य भूयः ।
अभिवन्द्य ततः शृणोतु सम्यक्-
समयान् भक्तिभरावनम्रमूर्तिः ॥ ८१ ॥

दत्त्वा शिष्याय मनुं न्यस्याथ गुरुः कृतात्मयजनविधिः ।
अष्टोत्तरसहस्रं स्वशक्तिहान्यनवाप्तये जप्यात् ॥ ८२ ॥

कुम्भादिकं च सकलं गुरवे समर्प्य
संभोजयेद् द्विजवरानथ भोज्यजातैः ।
कुर्वन्त्यनेन विधिना य इहाभिषेकं
ते संपदां निलयनं हि त एव धन्याः ॥ ८३ ॥

संक्षिप्य किञ्चिदुदिता दीक्षा संस्मरणाय विशदधियाम् ।
एनां प्रविश्य मन्त्री सर्वान् मन्त्राञ्जपेज्जुहोतु यजेच्च ॥ ८४ ॥

इति श्रीक्रमदीपिकायां (दीक्षादिविधिनिरूपणं नाम)
चतुर्थः पटलः सम्पूर्णः ॥ ४ ॥

अथ

# पञ्चमः पटलः।

चैत्रे कृत्वैतन्मासि कर्माच्छपक्षे
पुण्यर्क्षे भूयो देशि(कां? कात्)प्राप्य दीक्षाम्।
तेनानुज्ञातः पूर्वसेवां द्वितीये
मासि द्वादश्यामारभेच्चामलायाम् ॥ १ ॥

कृत्वा स्नानाद्यं कर्म देहार्चनान्तं
वर्त्माश्रित्य प्रागीरितं मन्त्रिमुख्यः।
शुद्धो मौनी ब्रह्मचारी निशाशी
जप्याच्छान्तात्मा शुक्लपक्षात्तदाज्ञा ॥ २ ॥

तनुशुश्रूषां गोषु ताभ्यः प्रयच्छन्
ग्रासं भूतेषु प्रोद्वहंश्चानुकम्पाम्।
मन्त्राधिष्ठात्रीं देवतां वन्दमानो
दुर्गां दुर्बोधध्वान्तभानुं गुरुं च ॥ ३ ॥

कुर्वन्नात्मीयं कर्म वर्णाश्रमस्थं
मन्त्रं जपाद्भिः स्नानकालेऽभिषिञ्चेत्।
आचामन् पाथस्तत्त्वसंख्याप्रजप्तं
भुञ्जानश्चान्नं सप्तजप्तं जलाद्यम् ॥ ४ ॥

प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः।
अष्टादशाक्षरं चेदयुतद्वयमित्युदीरिता संख्या ॥ ५ ॥

शाकं मूलं फलं गोस्तनभवदधिनी भैक्षमन्नं च (श? स)क्तून्
दौग्धान्नं चेत्यदानः क्षितिधरशिखरादौ क्रमात् स्थानभेदात्।

एकं चैषामशक्तौ गदितमिह मया पूर्वसेवाविधानं
निर्वृत्तेऽस्मिन् पुनश्च प्रजपतु विधिवत् सिद्धये साधकेशः ॥ ६ ॥

देवार्चनान्ते दिनशो दिनादौ
दीक्षोक्तमाज्ञान्यतरं विधानम् ।
आश्रित्य कृत्स्नं प्रयजेद् विविक्ते
गेहे निषण्णो हुतशेषभोजी ॥ ७ ॥

दशलक्षमक्षयफलप्रदं मनुं
प्रतिजप्य निर्मलमतिर्दशाक्षरम् ।
जुहुयाद्गुडाज्यमधुसंप्लुतैर्नवै-
ररुणाम्बुजैर्हुतवहे दशायुतम् ॥ ८ ॥

शशिरयुगलवर्णं चेन्मनुं पञ्चलक्षं
प्रजपतु जुहुयाच्च प्रोक्तक्लृप्त्यार्धलक्षम् ।
अमलमतिरलाभे पायसैरम्बुजानां
[1]सुहितघृतसिताक्तैराररभेद्धोमकर्म ॥ ९ ॥

अशक्तानां होमे निगमरसनागेन्द्रगुणितो
जपः कार्यो वेति द्विजनृपविशामाहुरपरे ।
सहोमश्चेदेषां सम इह जपो होमरहितो
य उक्तो वर्णानां स खलु विहितस्तच्चलदृशाम् ॥ १० ॥

यं वर्णमाश्रितो यः शूद्रः स च तन्नतभुवां विहितम् ।
विदधीत जपं विधि(व)च्छ्रद्धावान् भक्तिभावनम्रतनुः ॥ ११ ॥

पुनरभिषिक्तो गुरुणा विधिवद्विश्राण्य दक्षिणां तस्मै ।
अभ्यवहार्य्य च विप्रान् विभवैः संप्रीणयेच्च भक्तियुतः ॥ १२ ॥

इति मन्त्रवरद्वितयान्यतरं
परिसाध्य जपादिभिरच्युतधीः ।

---

१ 'स' क. पाठः ।

प्रयजेत् सवनत्रितये दिनशो
विधिनाथ मुकुन्दममन्दमतिः ॥ १३ ॥

अथ श्रीमदुद्यानसंवीतहेम-
स्थलोद्भासिरत्नस्फुरन्मण्डपान्तः ।
लसत्कल्पवृक्षाध उद्दीप्तरत्न-
स्थलाधिष्ठिताम्भोजपीठाधिरूढम् ॥ १४ ॥

महानीलनीलाभमत्यन्तबालं
घन[1]स्निग्धवक्त्रान्तविस्रस्तकेशम् ।
अलिव्रातपर्याकुलोत्फुल्लपद्म-
प्रमुग्धाननं श्रीमदिन्दीवराक्षम् ॥ १५ ॥

चलत्कुण्डलोल्लासिसंफुल्लगण्डं
सुघोणं सुशोणाधरं सुस्मितास्यम् ।
अनेकाश्मरश्म्युल्लसत्कण्ठभूषा-
लसन्तं वहन्तं नखं पौण्डरीकम् ॥ १५ ॥

समुद्धूलितो[2]रःस्थलं धेनुधूल्या
सुपुष्टाङ्गमष्टापदाकल्पदीप्तिम् ।
कटीरस्थले चारुजङ्घान्तयुग्मे
पिनद्धं क्वणत्किंकिणीजालधाम्ना ॥ १६ ॥

हसन्तं हसद्बन्धुजीवप्रसून-
प्रभापाणिपादाम्बुजोदारकान्त्या ।
करे दक्षिणे पायसं वामहस्ते
दधानं नवं शुद्धहैयङ्गवीनम् ॥ १७ ॥

महीभारभूतामरारातियूथा-
नन:पूतनादीन् निहन्तुं प्रवृत्तम् ।

---

१ 'गुड' क. पाठः । २ 'षरो' क. पाठः ।

प्रभुं गोपिकागोपगोवृन्दवीतं
सुरेन्द्रादिभिर्वन्दितं देववृन्दैः ॥ १८ ॥

प्रगे पूजयेद्वेत्यनुस्मृत्य विष्णुं
तदङ्गेन्द्रवज्रादिभिर्भक्तिनम्रः ।
सितामोचहैयङ्गवीनैश्च दध्ना
विमिश्रेण [1]दुग्धेन संप्रीणयेत्तम् ॥ १९ ॥

इति प्रातरेवार्चयेदच्युतं यो
नरः प्रत्यहं शश्वदास्तिक्ययुक्तः ।
लभेत् सोऽचिरेणैव लक्ष्मीं समग्रा-
मिह प्रेत्य शुद्धं परं धाम यायात् ॥ २० ॥

अह्नो मुखेऽनुदिनमित्यभिपूज्य शौरिं
दध्नाथवा गुडयुतेन निवेद्य तोयैः ।
श्रीमन्मुखे समनुतर्प्य च तद्धिया तं
जप्यात् सहस्रमथ साष्टकमादरेण ॥ २१ ॥

मध्यन्दिने जपविधानविशिष्टरूपं
वन्द्यं सुरर्षियतिखेचरमुख्यवृन्दैः ।
गोगोपगोपवनितानिकरैः परीतं
सान्द्राम्बुदच्छविसुजातमनोहराङ्गम् ॥ २२ ॥

मायूरपत्रपरिक्लृप्तवतंसरम्य-
धम्मिल्लमुल्लसितचिल्लिकमम्बुजाक्षम् ।
पूर्णेन्दुबिम्बवदनं मणिकुण्डलश्री-
गण्डं सुनासमतिसुन्दरमन्दहासम् ॥ २३ ॥

पीताम्बरं रुचिरनूपुरहारकाञ्ची-
केयूरकोर्मिकटकादिभिरुज्ज्वलाङ्गम् ।

१ 'दौ, क. पाठः ।

दिव्यानुलेपनपिशङ्गितमंसराज-
दम्लानचित्रवनमालमनङ्गदीप्ति[१]म् ॥ २४ ॥

वेणुं धमन्तमथवा स्वकरे दधानं
सव्ये दरं पशुपयष्टिमुदारवेणुम् ।
दक्षे मणिप्रवरमीप्सितदानदक्षं
ध्यात्वेत्थमर्चयतु नन्दजमिन्दिराप्त्यै ॥ २५ ॥

दामादिकाङ्गदयितासुहृदङ्घ्रिपेन्द्र-
वज्रादिभिः समभिपूज्य यथाविधानम् ।
दीक्षाविधिप्रकथितं च निवेद्यजातं
हैमे निवेदयतु पात्रवरे यथावत् ॥ २६ ॥

अष्टोत्तरं शतमथो जुहुयात् पयोऽन्नैः
सर्पिर्युतैः सुसितशर्करया विमिश्रैः ।
दद्याद्बलिं च निजदिक्षु सुरर्षियोगि-
वर्गोपदैवतगणेभ्य उदारचेताः ॥ २७ ॥

नवनीतमिलितपायसधियार्चनान्ते जलैर्मुखे तस्य ।
संतर्प्य जपतु मन्त्री सहस्रमष्टोत्तरशतं वापि ॥ २८ ॥

अह्नो मध्ये वल्लवीवल्लभं तं
नित्यं भक्त्याभ्यर्चयेद् यो नराग्र्यः ।
देवाः सर्वे तं नमस्यन्ति शश्वद्-
वर्तेरन् वै तद्वशे सर्वलोकाः ॥ २९ ॥

मेधायुःश्रीकान्तिसौभाग्ययुक्तः
पुत्रैर्मित्रैर्गोमहीरत्नधान्यैः ।
भोगैश्चान्यैर्भूरिभिः सन्निहाढ्यो
यायाद् भूयो धाम तच्चाच्युताख्यम् ॥ ३० ॥

---

१ 'प्तम्' क. पाठः ।

तृतीयकालपूजायामस्ति कालविकल्पना ।
सायाह्ने निशि वेत्यत्र वदन्त्येके मनीषिणः ॥ ३१ ॥
दशान्तरेण चेद्रात्रौ सायाह्नेऽष्टादशार्णतः ।
उभयमुभयेनैव कुर्यादित्यपरे जगुः ॥ ३२ ॥
सायाह्ने द्वारवत्यां तु चित्रोद्यानोपशोभिते ।
अष्टसाहस्रसंख्यातैर्भवनैरपि शोभिते ॥ ३३ ॥
हंससारससंकीर्णैः कमलोत्पलशोभिभिः ।
सरोभिरमलाम्भोभिः परीते भवनोत्तमे ॥ ३४ ॥
उद्यत्प्रद्योतनद्योतसद्युतौ मणिमण्डपे ।
मृद्वास्तरे समासीनं हेमाम्भोजासने हरिम् ॥ ३५ ॥
नारदाद्यैः परिवृतमात्मतत्त्वविनिर्णये ।
तेभ्यो मुनिभ्यः स्वं धाम दिशन्तं परमक्षरम् ॥ ३६ ॥
इन्दीवरनिभं सौम्यं पद्मपत्रायतेक्षणम् ।
स्निग्धकुन्तलसंभिन्न[१]मरीचिमुकुटोज्ज्वलम् ॥ ३७ ॥
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३८ ॥
काश्मीरकपिशोरस्कं पीतकौशेयवाससम् ।
हारकेयूरकटकरशनाद्यैः परि(स्कृ? ष्कृ)तम् ॥ ३९ ॥
हृतविश्वंभराभूरिभारं मुदितमानसम् ।
शङ्खचक्रगदापद्मराजद्भुजचतुष्टयम् ॥ ४० ॥
एवं ध्यात्वार्चयेन्मन्त्री स्यादङ्गैः प्रथमावृतिः ।
द्वितीया महिषीभिस्तु तृतीयायां समर्चयेत् ॥ ४१ ॥
नारदं पर्वतं जिष्णुं निशठोद्धवदारुकान् ।
विष्वक्सेनं च शैलेयं दिक्ष्वग्रे विनतासुतम् ॥ ४२ ॥

---

१ 'किरीट' क. पाठः ।

लोकेशैस्तत्प्रहरणैः पुनरावरणद्वयम् ।
इति संपूज्य विधिवत् पायसं च निवेदयेत् ॥ ४३ ॥
तर्पयित्वा खण्डमिश्रदुग्धबुद्ध्या जलैर्हरिम् ।
जपेदष्टशतं मन्त्री भावयन् पुरुषोत्तमम् ॥ ४४ ॥

पूजासु होमं सर्वासु कुर्यान्मध्यन्दिनेऽथवा ।
आसनाद्यर्घ्यपर्यन्तं कृत्वा स्तुत्वा नमेत् सुधीः ॥ ४५ ॥
समर्प्यात्मानमुद्वास्य तं स्वहृत्सरसीरुहे ।
विन्यस्य तन्मयो भूत्वा पुनरात्मानमर्चयेत् ॥ ४६ ॥
सायाह्ने वासुदेवं यो नित्यमेव यजेन्नरः ।
सर्वान् कामानवाप्यान्ते स याति परमां गतिम् ॥ ४७ ॥
रात्रौ चेन्मन्मथाक्रान्तमानसं देवकीसुतम् ।
यजेद् रासपरिश्रान्तं गोपीमण्डलमध्यगम् ॥ ४८ ॥

पृथुं सुवृत्तं मसृणं वितस्ति-
मात्रोन्नतं कौ विनिखन्य शङ्कुम् ।
आक्रम्य पद्भ्यामितरेतरात्त-
हस्तैर्भ्रमोऽयं खलु रासगोष्ठी ॥ ४९ ॥

स्थलनीरजमूलपरागभृता
लहरीकणजालभरेण सता ।
मरुता परितापहृताध्युषिते
सुसिते यमुनापुलिने विपुले ॥ ५० ॥

अशरीरनिशातशरोन्मथित-
प्रमदाशतकोटिभिराकुलिते ।
उडुनाथकरैर्विषदीकृतदिक्-
प्रसरे विचरद्भ्रमरीनिकरे ॥ ५१ ॥

विद्याधरकिन्नरसिद्धसुरै-
  र्गन्धर्वभुजङ्गमचारणकैः ।
दारोपहितैः सुविमानगतैः
  खस्थैरभिवृष्टसुपुष्पचयैः ॥ ५२ ॥

इतरेतरबद्धकरप्रमदा-
  गणकल्पितवासविहारविधौ ।
मणिशङ्कुगमप्यमुना वपुषा
  बहुधा विहितस्वकदिव्यतनुम् ॥ ५३ ॥

सुदृशामुभयोः पृथगन्तरगं
  दयिताकुलबद्धभुजद्वितयम् ।
निजसङ्गविजृम्भदनङ्गशिखि-
  ज्वलिताकुलसत्पुलकालियुजम् ॥ ५४ ॥

विविधश्रुतिभिन्नमनोज्ञतर-
  स्वरसप्तकमूर्च्छनतालगणैः ।
भ्रममाणममूभिरुदारमणि-
  स्फुटमण्डनशिञ्जितचारुतरम् ॥ ५५ ॥

इति भिन्नतनुं मणिभिर्मिलितं
  तपनीयमयैरिव मारकतम् ।
मणिनिर्मितमध्यगशङ्कुलस-
  द्विपुलारुणपङ्कजमध्यगतम् ॥ ५६ ॥

अतसीकुसुमाभतनुं तरुणं
  तरुणारुणपद्मपलाशदृशम् ।
नवपल्लवचित्रसुगुच्छलस-
  च्छिखिपिच्छपिनद्धकचप्रचयम् ॥ ५७ ॥

बहुलेतरचन्द्रसमानमुखं
मणिकुण्डलमण्डितगण्डयुगम् ।
शशवक्त्रसदृग्रदनच्छदं
मणिराजदनेकविधाभरणम् ॥ ५८ ॥

अ(श?स)नप्रसवच्छदनोज्ज्वलस-
द्वदनं सुविलासविलासभुवम् ।
नवविद्रुमभद्रकराङ्घ्रितलं
भ्रमराकुलदामविराजिभुजम् ॥ ५९ ॥

तरुणीकुचयुक्परिरम्भमिलद्-
घुसृणारुणवक्षसमुक्षगतिम् ।
शिववेणुसमीरितगानपरं
स्मरविह्वलितं भुवनैकगुरुम् ॥ ६० ॥

प्रथमोदितपीठवरे विधिवत्
प्रयजेदतिरूपमरूपमजम् ।
प्रथमं परिपूज्य तदङ्गवृतिं
मिथुनानि यजेद्रसगानि ततः ॥ ६१ ॥

दलषोडशके स्वरमूर्तिगणं
सहशक्तिकमुत्तमरासगतम् ।
सरमावदनं स्वकलासहितं
मिथुनार्द्धमथेन्द्रपविप्रमुखान् ॥ ६२ ॥

इति सम्यगमुं परिपूज्य हरिं
चतुरावृतिसंवृतमार्द्रमतिः ।
रजतारचिते चषके ससितं
सुशृतं सुपयोऽस्य निवेदयतु ॥ ६३ ॥

विभवे सति कांस्यमयेषु पृथक्
चषकेषु तु षोडशसु क्रमशः ।
मिथुनेषु निवेद्य पयः ससितं
विदधीत पुरोवदथो सकलम् ॥ ६४ ॥

सकलभुवनमोहनं विधिं यो
नियतममुं निशि निश्युदारचेताः ।
भजति स खलु सर्वलोकपूज्यः
श्रियमचलां समवाप्य यात्यनन्तम् ॥ ६५ ॥

निशि वा दिनान्तसमये प्रपूजयेन्नित्यशोऽच्युतं भक्त्या ।
समफलमुभयं हि ततः संसाराब्धिं समुत्तितीर्षति यः ॥ ६६ ॥

इत्येवं मनुविग्रहं मधुरिपुं यो रात्रिकालं भजेत्
तस्यैवाखिलजन्तुजातदयितस्याम्भोधिजावेश्मनः ।
हस्ते धर्मसुखार्थमोक्षतरवः सद्वर्गसंप्रार्थिताः
सान्द्रानन्दसुधारसद्रवमुचो येषां फलश्रेण्यः ॥ ६७ ॥

अथोच्यते पूर्वसमीरितानां
पूजावसाने परमस्य पुंसः ।
कल्पस्तु कामेष्वपि तर्पणानां
विनापि पूजां खलु वै फलं स्यात् ॥ ६८ ॥

संतर्प्य [1]पीठमन्त्रैः शक्तीः [2]सकृत्प्रथममच्युतं तत्र ।
आवाह्य पूजयेत्तं तोयैरेवाखिलैः समुपहारैः ॥ ६९ ॥
बद्ध्वाथ धेनुमुद्रां तोयैः संपाद्य तर्पणद्रव्यम् ।
तद्बुद्ध्याञ्जलिना तं सुवर्णचषकीकृतेन तर्पयतु ॥ ७० ॥
विंशतिरष्टोपेता कालत्रयतर्पणेषु संख्योक्ता ।
भूयः स्वकालविहिता सकृत्सकृत्तर्पयेच्च परिवारान् ॥ ७१ ॥

---

१ 'पा' क. पाठः ।  २ 'सकृत्सकृत्' क. पाठः ।

प्रातर्दधिगुडमिश्रं मध्याह्ने पायसं सनवनीतम् ।
क्षीरं तृतीयकालेससितोपलमित्युदीरितं द्रव्यम् ॥ ७२ ॥
तर्पयामि पदं योज्यं मन्त्रान्तेष्वेषु नामसु ।
द्वितीयान्तेषु तु पुनः पूजाशेषं समापयेत् ॥ ७३ ॥

अभ्युद्य तत्प्रसादाद्भिरात्मानं प्रपिबेदपः ।
तं जप्त्वा तमथोद्वास्य तन्मयः प्रजपेन्मनुम् ॥ ७४ ॥
अथ द्रव्याणि काम्येषु वक्ष्यन्ते तर्पणेषु तु ।
तानि प्रोक्तविधानानामाश्रित्यान्यतमं यजेत् ॥ ७५ ॥

द्रव्यैः षोडशभिरमुं तर्पयेदेकतश्चतुर्वारम् ।
स चतुः क्षीराद्यन्तैः सकृज्जलाद्यं तमच्युतं भक्त्या ॥ ७६ ॥
पायसं दाधिकं कृ(ष?स)रं गौडान्नं पयो दधि नवनीतम् ।
आज्यं कदली मोचा रजःस्वला(?)मोदकापूपम् ॥ ७७ ॥
पृथुकं लाजसमेतं द्रव्याणां कथितमिह षोडशकम् ।
लाजान्तेऽन्त्यक्षीरात् प्राक् समर्प्य सितोपलपुञ्जम् ॥ ७८ ॥

प्रगे चतुःसप्ततिवारमित्यमुं
प्रतर्पयेद् योऽनुदिनं नरो हरिम् ।
अनन्यधीस्तस्य समस्तसंपदः
करस्थिता मण्डलतोऽभिवाञ्छिताः ॥ ७९ ॥

धारोष्णपक्वपयसी दधिनवनीते घृतं च दौग्धान्नम् ।
मत्स्यण्डी मध्वमृतं द्वादशशस्तर्पयेन्नवभिरेभिः ॥ ८० ॥
तर्पणविधिरयमपरः पूर्वोदितसमफलाष्टशतसंख्यः ।
कार्मणकर्मणि [1]कृष्टौ जनसं[2]चलने विशेषतो विहितः ॥ ८१ ॥

सखण्डधारोष्णाधिया मुकुन्दं
व्रजं पुरं ग्राममपि प्रतर्प्य ।

---

१ 'कीर्तौ' क. पाठः । २ 'व' क. पाठः ।

लभेत भोज्यं सरसं स्वभृत्यै
वासांसि धान्यानि धनानि मन्त्री ॥ ८२ ॥

यावत् सन्तर्पयेन्मन्त्री तावत्संख्यां यजेन्मनुम् ।
तर्पणेनैव कार्याणि साधयेदखिलान्यपि ॥ ८३ ॥

द्विजो भिक्षावृत्तिर्य इह दिनशो नन्दतनयः
स्वयं भूत्वा भिक्षामटति विहरन् गोपसुदृशाम् ।
अमा चेतोभिः स्वैर्ललितललितैर्नर्मविधिभि-
र्दधिक्षीरा[1]ज्याढ्यां प्रचुरतरभिक्षां स लभते ॥ ८४ ॥

मध्ये कोणेषु षट्स्वप्यनलपुरपुटस्यालिखेत् कर्णिकायां
कन्दर्पं साध्ययुक्तं विवरगतषडर्णद्विशः केसरेषु ।
शक्तिश्रीपूर्वकालिद्विनवलिपिमनोरक्षराणि च्छदानां
मध्ये वर्णान् दशानां दशलिपिमनुवर्यस्य चैकैकशोऽञ्जम् ॥ ८५ ॥

भूसद्मनाभिवृतमस्त्रिगमन्मथेन
गोरोचनाभिलिखितं तपनीयसूच्या ।
पट्टे हिरण्यरचिते गुलिकीकृतं तद्-
गोपालयन्त्रमखिलार्थदमेतदुक्तम् ॥ ८६ ॥

संपातसिक्तमभिजप्तमिदं महद्भि-
र्धार्यं जगत्त्रयवशीकरणैकदक्षम् ।
रक्षायशःसुतमहीधनधान्यलक्ष्मी-
सौभाग्यलिप्सुभिरजस्रमनर्घ्यवीर्यम् ॥ ८७ ॥

भूतोन्मादापस्मृतिविषमूर्च्छाविषमज्वरार्तानाम् ।
ध्यायञ् शिरसि प्रजपेन्मन्त्रमिदं झटिति शमयितुं विकृतीः ॥ ८८ ॥
[2]मारस्त्रिविक्रमाक्रान्तश्चक्री षणाय हृदित्यसौ ।
षडक्षरोऽयं संप्रोक्तः सर्वसिद्धिकरो मनुः ॥ ८९ ॥

---

१ 'दा' क. पाठः । २ 'सु' क. पाठः ।

क्रोडोऽग्निदीप्तो मायावी लवलाञ्छितमस्तकः ।
सैषा शक्तिः परा सूक्ष्मा नित्या संवित्स्वरूपिणी ॥ ६० ॥
अस्थ्यग्निगोविन्दलवैर्लक्ष्मीबीजं समीरितम् ।
आभ्यामष्टादशलिपिः स्याद्विंशत्यक्षरो मनुः ॥ ६१ ॥
शालग्रामे मनौ यन्त्रे मण्डले प्रतिमासु च ।
नित्यं पूजा हरेः कार्या नतु केवलभूतले ॥ ६२ ॥

इति जपहुतपूजातर्पणाद्यैर्मुकुन्दं
य इह भजति मन्वोरेकमाश्रित्य नित्यम् ।
स तु सुचिरमयत्नात् प्राप्य भोगानशेषान्
पुनरमलतरं तद्धाम विष्णोः प्रयाति ॥ ६३ ॥

इति श्रीक्रमदीपिकायां (पुरश्चर्यादिविधानं नाम)
पञ्चमः पटलः ॥ ५ ॥

अथ

# षष्ठः पटलः ।

विनियोगानथो वक्ष्ये मन्त्रयोरुभयोः समान् ।
तदर्थकारिणोऽनन्तवीर्यान् मन्त्रांश्च कांश्चन ॥ १ ॥
वन्दे तं देवकीसूनुं सद्योजाताम्बुदप्रभम् ।
पीताम्बरं करलसच्चक्रशङ्खगदाम्बुजम् ॥ २ ॥
एवं ध्यात्वा जपेन्मन्त्रं लक्षं ब्राह्मे मुहूर्तके ।
स्वादुप्लुतैश्च कुसुमैः पालाशैरयुतं हुनेत् ॥ ३ ॥
मन्वोरन्यतरेणैव कुर्याद्यः सुसमाहितः ।
स्मृतिमेधाधृतिबलं लब्ध्वा स कविराड् भवेत् ॥ ४ ॥
स्यान्मनुस्तत्समजपध्यानहोमफलोऽपरः ।
श्रीमन्मुकुन्दचरणौ सदेति शरणं ततः ॥ ५ ॥
अहं प्रपद्य इत्युक्तो मौकुन्दोऽष्टादशाक्षरः ।
नारदोऽस्य तु गायत्री मुकुन्दश्चर्षिपूर्वकः ॥ ६ ॥
प्रातः प्रातः पिबेत्तोयं जप्त्वा योऽष्टोत्तरं शतम् ।
अनेन षड्भिर्मासैः स भवेच्छ्रुतिधरो नरः ॥ ७ ॥
उपसंहृतदिव्याङ्गं पुरोवन्मातुरङ्कगम् ।
चलद्गोचारणं बालं नीलाभासं स्मरञ्जपेत् ॥ ८ ॥
अयुतं तावदेवाज्यैर्जुहुयाच्च हुताशने ।
स लभेदचलां भक्तिं श्रद्धां शान्तिं च शाश्वतीम् ॥ ९ ॥
मनुनैतत्समस्तान्ते मरुल्लसितशब्दतः ।
बाललीलात्मने हूंफट्नम इत्यमुनाऽथवा ॥ १० ॥

नलकूवरगायत्रीबालकृष्णा इतीरिताः ।
ऋष्याद्याः सिद्धयः सर्वाः स्युर्जपाद्यैरिहामुना ॥ ११ ॥
लङ्घिते बालशयने रुदन्तं वल्लवीजनैः ।
प्रेङ्ख्यमाणं दुग्धबुद्ध्या तर्पयेत् सोऽश्नुतेऽशनम् ॥ १२ ॥
अमुना वान्नरूपान्ते रसरूपपदं वदेत् ।
तुष्टिरूपनमोद्वन्द्वमन्नाधिपतये नमः ॥ १३ ॥
अन्नं प्रयच्छ स्वाहेति त्रिंशद्वर्णोऽन्नदो मनुः ।
नारदानुष्टुबन्नाधिपतयोऽस्यर्षिपूर्वकाः ॥ १४ ॥
भू(ता ? त)बालग्रहोन्मादस्मृतिभ्रंशाद्युपद्रवैः ।
पूतनास्तनपातारं ग्रस्तमूर्ध्नि स्मरञ्जपेत् ॥ १५ ॥
सासुचूषणनिर्भिन्नसर्वाङ्गीं रुदतीं च ताम् ।
आविश्य सर्वे मुक्त्वा तं विद्रवन्ति द्रुतं ग्रहाः ॥ १६ ॥
जुहुयात् खरमञ्जर्या मञ्जरीभिर्विभावसौ ।
प्रस्नातः पञ्चगव्याद्भिः पूतनाहन्तुराननेे ॥ १७ ॥
प्राशयेच्छिष्टगव्यं तत्कलशेनाभिषेचयेत् ।
साध्यं सहस्रजप्तेन सर्वोपद्रवशान्तये ॥ १८ ॥
मनुनैतद्द्वादशार्णहुंफट्स्वाहान्तिकेन वा ।
ऋष्याद्या ब्रह्मगयत्रीग्रहघ्नहरयोऽस्य तु ॥ १९ ॥
निजपादाम्बुजक्षिप्तशकटं चिन्तयञ्जपेत् ।
अयुतं मन्त्रयोरेकं सर्वविघ्नोपशान्तये ॥ २० ॥
अङ्गान्यमीषां मन्त्राणामाचक्रादिभिरर्चना ।
अङ्गैरिन्द्रादिवज्राद्यैरुदिता संपदे सदा ॥ २१ ॥
बालो नीलतनुर्दोर्भ्यां दध्युत्थं पायसं दधत् ।
हरिर्वोऽव्याद् द्वीपिनखकिङ्किणीजालमण्डितः ॥ २२ ॥

ध्यात्वैवमग्नौ जुहुयाच्छतवीर्याङ्कुरत्रिकैः ।
पयःसर्पिःप्लुतैर्लक्षमेकं तावज्जपन् मनुम् ॥ २३ ॥
गुरवे दक्षिणां दत्त्वा भोजयेद् द्विजपुङ्गवान् ।
स ह्यब्दानां शतं जीवेन्नीरोगो नात्र संशयः ॥ २४ ॥
अत्राप्यन्यो मनुर्द्वादशार्णान्ते पुरुषोत्तमम् ।
आयुर्मे देहि संभाष्य विष्णवे प्रभविष्णवे ॥ २५ ॥
नमोऽन्तो ह्यधिकत्रिंशदर्णोऽस्यर्षिस्तु नारदः ।
छन्दोऽनुष्टुब् देवता च श्रीकृष्णोऽङ्गानि च ब्रुवे ॥ २६ ॥
रविभूतेन्द्रियवसुनेत्राणैश्चात्मनेयुतैः ।
महानन्दप्रतिज्योतिर्मायाविद्यापदैः क्रमात् ॥ २७ ॥
जप्त्वा लक्षमिमं मन्त्रमयुतं पायसैर्हुनेत् ।
पूर्ववद् दूर्वया जुह्वदायुर्दीर्घतरं लभेत् ॥ २८ ॥
दारयन्तं बकं दोर्भ्यां कृष्णं संगृह्य तुण्डयोः ।
स्मरञ् शिशूनामातङ्के स्पृष्ट्वान्यतरमभ्यसेत् ॥ २९ ॥
तज्जप्ततिलजाभ्यङ्गाद् भवेयुः सुखिनश्च ते ।
अत्राप्यन्यो मनुर्बालवपुषे वह्निवल्लभा ॥ ३० ॥
गोरक्षायां क्वणद्वेणुं चारयन्तं पशूंस्तथा ।
उक्त्वा च गोपालपदं पुनर्वेशधराय च ॥ ३१ ॥
वासुदेवाय वर्म्मास्त्रशिखास्याष्टादशाक्षरः ।
मनुर्नारदगायत्रीकृष्णर्ष्यादिरनेन वा ॥ ३२ ॥
कुर्याद् गोपालसंरक्षामाचक्राद्यङ्गिना बुधः ।
कुम्भीनसादि(द्ये?द्वे)डार्त्तौ दष्टमूर्ध्नि स्मर(न्)हरिम् ॥ ३३ ॥
नृत्यन्तं कालीयफणामध्येऽन्यतरमभ्यसेत् ।
दृष्ट्या पीयूषवर्षिण्या सिञ्चन्तं तत्तनुं बुधः ॥ ३४ ॥

तर्जयन् वामतर्जन्या तं द्राङ् मोचयते विषात् ।
आपूर्य कलशं तोयैः स्मृत्वा कालीयमर्दनम् ॥ ३५ ॥
जप्त्वाष्टशतमासिञ्चेद् विषिणं स सुखी भवेत् ।
कालिमध्येत्य यस्यान्ते फणामध्ये(द्विव?दिव्या)र्णकान् ॥ ३६ ॥
उक्त्वा पुनर्वदेन्नृत्यं करोति तमनन्तरम् ।
नमामि देवकीपुत्रमित्युक्त्वा नृत्यशब्दतः ॥ ३७ ॥
राजानमच्युतं ब्रूयादिति दण्डलिपिर्मनुः ।
अस्याङ्गान्यङ्घ्रिभिर्व्यस्तैः समस्तैर्नारदो मुनिः ॥ ३८ ॥
छन्दोऽनुष्टुब् देवता च कृष्णः कालीयमर्दनः ।
जप्याल्लक्षं मनुवरं होतव्यं सर्पिषायुतम् ॥ ३९ ॥
अङ्गदिक्पालवज्राद्यैरर्चनास्य समीरिता ।
क्रियानेनैव वा सर्वा कर्तव्या प्रागुदीरिता ॥ ४० ॥
सदृक्षोऽनेन जगति नहि क्ष्वेडहरो मनुः ।
अङ्गैः शुकतरोः पिष्टैर्गुलिका धेनुवारिणा ॥ ४१ ॥
विषघ्नीपाननस्याञ्जनालेपैः साधितामुना ।
उद्दण्डवामदोर्दण्डधृतगोवर्धनाचलम् ॥ ४२ ॥
अन्यहस्ताङ्गुलिव्यक्तस्वरवंशार्पिताननम् ।
ध्यायन् हरिं जपेन्मन्त्वोरेकं छत्रं विना व्रजन् ॥ ४३ ॥
वर्षवाताशनिभ्यः स्याद्भयं तस्य नहि क्वचित् ।
मोघमेघौघयत्नापगतेन्द्रं संस्मरन् हुनेत् ॥ ४४ ॥
लोनैरयुतसंख्यं स्यादनावृष्टिर्न संशयः ।
क्रीडन्तं यमुनामध्ये मज्जनप्लावनादिभिः ॥ ४५ ॥
उच्छीकरजलासारैः सिच्यमानं प्रियाजनैः ।
ध्यात्वायुतं पयःसिक्तैर्हुनेद्वा नीरतर्पणैः ॥ ४६ ॥

वृष्टिर्भवत्यकालेऽपि महती नात्र संशयः ।
आद्यमेव स्मरन् मूर्ध्नि विषस्फोटज्वरादिभिः ॥ ४७ ॥
सदाहमोहैरार्तस्य जपेच्छान्तिर्भवेत् क्षणात् ।
अथवा गरुडारूढं बलप्रद्युम्नसंयुतम् ॥ ४८ ॥
निजज्वरविनिष्पिष्टज्वराभिष्णुतमच्युतम् ।
ध्यात्वा ज्वराभिभूतस्य मूर्ध्न्यन्यतरमभ्यसेत् ॥ ४९ ॥
शान्तिं व्रजेदसाध्योऽपि ज्वरः सोपद्रवः क्षणात् ।
ध्यात्वैवमग्नावभ्यर्च्य पयोक्तैश्चतुरङ्गुलैः ॥ ५० ॥
जुहुयादमृताखण्डैरयुतं ज्वरशान्तये ।
निशातशरनिर्भिन्नभीष्मतापहरं हरिम् ॥ ५१ ॥
स्मृत्वा स्पृशञ् जपेदार्तं पाणिभ्यां रोगशान्तये ।
अपमृत्युविनाशाय सांदीपनिसुतप्रदम् ॥ ५२ ॥
ध्यात्वामृतलताखण्डैः क्षीराक्तैरयुतं हुनेत् ।
मृतपुत्राय ददतं सुतं विप्राय सार्जुनम् ॥ ५३ ॥
ध्यात्वा लक्षं जपेदेकं मन्वोः सुतविवृद्धये ।
पुत्रजीवेन्धनचिते जुहुयादनलेऽयुतम् ॥ ५४ ॥
तत्फलैर्मधुराक्तैः स्युः पुत्रा दीर्घायुषोऽस्य तु ।
क्षीरद्रुकाथसंपूर्णमभ्यर्च्य कलशं निशि ॥ ५५ ॥
जप्त्वायुतं प्रगे नारीमभिषिञ्चेद् द्विषड्दिनम् ।
सा वन्ध्यापि सुतान् दीर्घजीविनो गदवर्जितान् ॥ ५६ ॥
लभते नात्र संदेहस्तज्ज्ञप्ताज्याशिनी सती ।
प्रातर्वाचंयमा नारी बोधिच्छदपुटैर्जलम् ॥ ५७ ॥
अष्टोत्तरशतं जप्तं मासं पुत्रीयती पिबेत् ।
देवकीसुत गोविन्द वासुदेव जगत्पते ॥ ५८ ॥

देहि मे तनयं देव त्वामहं शरणं गता ।
प्रहितां काशिराजेन कृत्यां जित्वा निजारिणा ॥ ५९ ॥
तत्तेजसा तन्नगरीं दहन्तं भावयन् हरिम् ।
सुस्नेहाक्तैर्हुनेद्रात्रौ सर्षपैः सप्तवासरम् ॥ ६० ॥
कृत्याकर्तारमेवासौ कुपितो नाशयिष्यति ।
आसीनमाश्रमे दिव्ये बदरीषण्डमण्डिते ॥ ६१ ॥
स्पृशन्तं पाणिपद्माभ्यां घण्टाकर्णकलेवरम् ।
ध्यात्वाच्युतं तिलैर्लक्षं हुनेत् त्रिमधुरप्लुतैः ॥ ६२ ॥
जपेद्वा सर्वपापानां शान्तये कान्तये तनोः ।
द्वेषयन्तं[1] रुक्मिबलौ द्यूता(श ? स)क्तौ स्मरन् हरिम् ॥ ६३ ॥
जुहुयाद् द्विष्टयोर्द्विष्ट्यै गुलिका गोमयोद्भवाः ।
ज्वलद्वह्निनिभैर्बाणैर्वर्षन्तं गरुडस्थितम् ॥ ६४ ॥
धावमानं रिपुगणमनुधावन्तमच्युतम् ।
ध्यात्वैवमभ्यसेदेकं मन्वोः सप्तसहस्रकम् ॥ ६५ ॥
उच्चाटनं भवेदेतद् रिपूणां सप्तभिर्दिनैः ।
उत्क्षिप्तवत्सकं ध्यायन् कपित्थफलहारिणम् ॥ ६६ ॥
अयुतं प्रजपेत् साध्यमुच्चाटयति तत्क्षणात् ।
आत्मानं कंसमथनं ध्यात्वा मञ्चान्निपातितम् ॥ ६७ ॥
कंसात्मानमरिं कर्षन् गतासुं प्रजपेन्मनुम् ।
अयुतं जुहुयाच्चास्य जन्मोडुतरुतर्पणैः ॥ ६८ ॥
अपि सेवितपीयूषो म्रियतेऽरिर्न संशयः ।
अथवा निम्बतैलाक्तैर्हुनेदधोभिरक्षजैः ॥ ६९ ॥
अयुतं प्रजपेद्रात्रौ मारणाय रिपोः क्षणात् ।
दोषारिष्टदलव्योषकार्पासास्थिकणैर्निशि ॥ ७० ॥

---

१ 'न्तौ' क. पाठः ।

हुनेदेरण्डतैलाक्तैः श्मशानस्थोऽरिशान्तये ।
न शस्तं मारणं कर्म कुर्याच्चेदयुतं जपेत् ॥ ७१ ॥
हुनेद्वा पायसैस्तावच्छान्तये शान्तमानसः ।
जयकामो जपेल्लक्षं पारिजातहरं हरिम् ॥ ७२ ॥
स्मरन् पराजयस्तस्य कुतश्चिन्न भविष्यति ।
पार्थे दिशन्तं गीतार्थं व्याख्यामुद्राकरं हरिम् ॥ ७३ ॥
रथस्थं भावयञ्जप्याद् धर्मवृद्ध्यै शमाय च ।
लक्षं पालाशकुसुमैरयुतं मधुराप्लुतैः ॥ ७४ ॥
व्याख्याता सर्वशास्त्राणां सुकविर्वादिराड् भवेत् ।
विश्वरूपधरं प्रोद्यद्भास्वत्कोटिसमप्रभम् ॥ ७५ ॥
द्रुतचामीकरनिभमग्नीषोमात्मकं हरिम् ।
अर्काग्निद्योतदास्याङ्घ्रिपङ्कजं दिव्यभूषणम् ॥ ७६ ॥
नानायुधधरं व्याप्तविश्वाकाशावकाशकम् ।
राष्ट्रपूर्ग्रामवास्तूनां शरीरस्य च रक्षणे ॥ ७७ ॥
प्रजपेन्मन्त्रयोरेकतरं ध्यात्वैवमादरात् ।
अथवा व्यस्तसर्वाङ्घ्रिरचिताङ्गार्जुनर्षिकम् ॥ ७८ ॥
त्रिष्टुप्छान्दसिकं विश्वरूपविष्णवधिदैवतम् ।
जपेद् गीतामनुं स्थाने हृषीकेशाद्यमाज्यकैः ।
हुनेद्वा सर्वरक्षायै सर्वविघ्नोपशान्तये ॥ ७९ ॥

इति श्रीक्रमदीपिकायां (मन्त्रविनियोगप्रदर्शनं नाम)
षष्ठः पटलः ॥ ६ ॥

अथ

# सप्तमः पटलः ।

व(त्तो ? त्ये)ऽत्तयधनावाप्त्यै प्रतिपत्तिं श्रियःपतेः ।
सुगुप्तां धननाथाद्यैर्धन्यैर्या क्रियते सदा ॥ १ ॥
द्वारवत्यां सहस्रार्कभास्वरैर्भवनोत्तमैः ।
अनल्पैः कल्पवृक्षैश्च परीते मणिमण्डिते ॥ २ ॥
ज्वलद्रत्नमयस्तम्भद्वारतोरणकुड्यके ।
फुल्लस्रगुल्लसच्चित्रवितानालम्बिमौक्तिके ॥ ३ ॥
पद्मरागस्थलीराजद्रत्ननद्योश्च मध्यतः ।
अनारतगलद्रत्नधारस्य स्वस्तरोरधः ॥ ४ ॥
रत्नप्रदीपावलिभिः प्रदीपितदिगन्तरे ।
उद्यदादित्यसंकाशं मणिसिंहासनाम्बुजे ॥ ५ ॥
समासीनोऽच्युतो ध्येयो द्रुतहाटकसंनिभः ।
समानोदितचन्द्रार्कतडित्कोटिसमप्रभः ॥ ६ ॥
सर्वाङ्गसुन्दरः सौम्यः सर्वाभरणभूषितः ।
पीतवासाश्चक्रशङ्खगदापद्मोज्ज्वलद्भुजः ॥ ७ ॥
अनारतोच्छलद्रत्नधारौघं कलशं स्पृशन् ।
वामपादाम्बुजाग्रेण(मृष्टता ? स्रजता)पल्लवच्छविम् ॥ ८ ॥
रुक्मिणीसत्यभामेऽस्य मूर्ध्नि रत्नौघधारया ।
सिञ्चन्त्यौ दत्तवामस्थे स्वदोःस्थकल(सो ? शो)त्थया ॥ ९ ॥
नाग्नजितीसुनन्दे च दिशन्त्यौ कलशौ तयोः ।
ताभ्यां च दत्तवामस्थे मित्रविन्दासुलक्षणे ॥ १० ॥

रत्नवद्योः समुद्धृत्य रत्नपूर्णौ घटौ तयोः ।
जाम्बवती सुशीला च दिशन्त्यौ दत्त्वामगे ॥ ११ ॥
बहिः षोडशसाहस्रसंख्याताः परितः प्रियाः ।
ध्येयाः कनकरत्नौघधारायुक्कलशोज्ज्वलाः ॥ १२ ॥
तद्बहिश्चाष्टनिधयः पूरयन्तो धनैर्धराम् ।
तद्बहिर्वृष्णयः सर्वे पुरोवच्च सुरादयः ॥ १३ ॥
ध्यात्वैवं परमात्मानं विंशत्यर्णं मनुं जपेत् ।
चतुर्लक्षं हुनेदाज्यैश्चत्वारिंशत्सहस्रकम् ॥ १४ ॥
शक्तिश्रीपूर्वकोऽष्टादशार्णो विंशतिवर्णकः ।
[1]मन्त्रेणाऽनेन सदृशो मनुर्नहि जगत्त्रये ॥ १५ ॥
ऋषिर्ब्रह्मास्य गायत्री च्छन्दः कृष्णस्तु देवता ।
पूर्वप्रोक्तवदेवास्य बीजशक्त्यादिकल्पना ॥ १६ ॥
कल्पः सनत्कुमारोक्तो मन्त्रस्यास्योच्यतेऽधुना ।
पीठन्यासान्तिकं कृत्वा पूर्वोक्तक्रमतः सुधीः ॥ १७ ॥
करद्वन्द्वाङ्गुलितलेष्वङ्गषट्कं प्रविन्यसेत् ।
मन्त्रेण व्यापकं कृत्वा मातृकां मनुसंपुटाम् ॥ १८ ॥
संहारसृष्टिमार्गेण दश तत्त्वानि च न्यसेत् ।
पुनश्च व्यापकं कृत्वा मन्त्रवर्णांस्तनौ न्यसेत् ॥ १९ ॥
मूर्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः कर्णयोर्नसोः ।
आनने चिबुके कण्ठे दोर्मूले हृदि तुन्दके ॥ २० ॥
नाभौ लिङ्गे तथाधारे कट्यां जान्वोश्च जङ्घयोः ।
गुल्फयोः पादयोर्न्यसेत् सृष्टिरेषा समीरिता ॥ २१ ॥
स्थितिर्हृदादिपादान्ता संहृतिश्चरणादिका ।
विधायैवं पञ्चकृत्वः स्थित्यस्तं मूर्तिपञ्जरम् ॥ २२ ॥

---

१ 'मन्त्रोऽनेन सदृशोऽन्यो' क. पाठः ।

सृष्टिस्थिती च विन्यस्य षडङ्गन्यासमाचरेत् ।
गुणाग्निवेदकरणकरणाद्यक्षरैर्मनोः ॥ २३ ॥
मुद्रा बद्ध्वा किरीटाद्या दिग्बन्धं पूर्ववच्चरेत् ।
ध्यात्वा जप्त्वार्चयेद् देवं[1] मूर्तिपञ्जरपूर्वकम् ॥ २४ ॥
अथ बाह्येऽर्चयेद्विष्णुं तदर्थं यन्त्रमुच्यते ।
गोमयेनोपलिप्योर्वीं तत्र पीठं निधापयेत् ॥ २५ ॥
विलिप्य गन्धपङ्केन लिखेदष्टदलाम्बुजम् ।
कर्णिकायां तु षट्कोणं ससाध्यं तत्र मन्मथम् ॥ २६ ॥
शिष्टैस्तु सप्तदशभिरक्षरैर्वेष्टयेत् स्मरम् ।
प्राग्रक्षोऽनिलकोणेषु श्रियं शिष्टेषु संविदम् ॥ २७ ॥
षडक्षरं सन्धिषु च केसरेषु त्रिशस्त्रिशः ।
विलिखेत् स्मरगायत्रीं मालामन्त्रं दलाष्टके ॥ २८ ॥
षट्शः संलिख्य तद्बाह्ये वेष्टयेन्मातृकाक्षरैः ।
भूबिम्बं च लिखेद्बाह्ये श्रीमाये दिग्विदिक्ष्वपि ॥ २९ ॥
एतद्यन्त्रं हाटकादिपट्टेष्वालिख्य पूर्ववत् ।
साधितं धारयेद्यो वै सोऽर्च्यते त्रिदशैरपि ॥ ३० ॥
स्याद् गायत्री कामदेवपुष्पबाणौ च ङेन्तकौ ।
विद्महेधीमहियुतौ तन्नोऽनङ्गः प्रचोदयात् ॥ ३१ ॥
जप्या जपादौ गोपालमन्त्राणां जनरञ्जनी ।
नत्यन्ते कामदेवाय ङेऽन्तं सर्वजनप्रियम् ॥ ३२ ॥
उक्त्वा सर्वजनान्ते तु संमोहनपदं तथा ।
ज्वलज्वल प्रोज्ज्वलेति प्रोक्त्वा सर्वजनस्य च ॥ ३३ ॥
हृदयं मम च ब्रूयाद् वशं कुरुयुगं शिरः ।
प्रोक्तो मदनमन्त्रोऽष्टचत्वारिंशद्भिरक्षरैः ॥ ३४ ॥

---

१ 'हुं' क. पाठः ।

जपादौ मारबीजाढ्यो जगत्त्रयवशीकरः ।
भूगृहं चतुरस्रं स्याद‍ष्टशू[1]लविभूषितम् ॥ ३५ ॥
पीठं पूर्ववदभ्यर्च्य मूर्तिं संकल्य पौरुषीम् ।
तत्रावाह्याच्युतं भक्त्या सकलीकृत्य पूजयेत् ॥ ३६ ॥
आसनादिविभूषान्तं पुनर्न्यासक्रमाद्यजेत् ।
सृष्टिस्थितिषडङ्गं च किरीटं कुण्डलद्वयम् ॥ ३७ ॥
शङ्खचक्रगदापद्ममालाश्रीवत्सकौस्तुभान् ।
गन्धाक्षतप्रसूनैश्च मूलेनाभ्यर्च्य पूर्ववत् ॥ ३८ ॥
आदौ वह्निपुरद्वन्द्वकोणेष्वङ्गानि पूजयेत् ।
सहृच्छिरः शिखा वर्म नेत्रमस्त्रमिति क्रमात् ॥ ३९ ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
अग्न्यादिदलमूलेषु शान्तिः श्रीश्च सरस्वती ॥ ४० ॥
रतिश्च दिग्दलेष्वर्च्या ततोऽष्टौ महिषीर्यजेत् ।
रुक्मिण्याद्या दक्षसव्यक्रमात् पत्राग्रकेषु च ॥ ४१ ॥
ततः षोडशसाहस्रं सकृदेवार्चयेत् प्रियाः ।
इन्द्रनीलमुकुन्दाद्या[2]न् मकरानन्दकच्छपान् ॥ ४२ ॥
शङ्खपद्मादिकांश्चापि निधीनष्टौ क्रमाद्यजेत् ।
तद्बहिश्चेन्द्रवज्राद्या आवृतीः संप्रपूजयेत् ॥ ४३ ॥
इति सप्तावृतिवृतमभ्यर्च्याच्युतमादरात् ।
प्रीणयेद् दधिखण्डाज्यसंमिश्रेण पयोऽधसा ॥ ४४ ॥
राजोपचारान् दत्त्वा तु स्तुत्वा नत्वा च केशवम् ।
उद्वासयेत् स्वहृदये परिवारगणैः सह ॥ ४५ ॥
न्यस्यात्मानं समभ्यर्च्य तन्मयः प्रजपेन्मनुम् ।
रत्नाभिषेके ध्यानेज्या विंशत्यर्णाश्रितेरिता ॥ ४६ ॥

---

१ 'वज्र' क. पाठः । २ 'ख्या' क. पाठः ।

जपहोमार्चनध्यानैर्योऽमुं प्रभजते मनुम् ।
तद्वेश्म पूर्यते रत्नैः स्वर्णधान्यैरनारतम्[1] ॥ ४७ ॥
पृथ्वी पृथ्वी करे तस्य सर्वशस्यसमाकुला ।
पुत्रैर्मित्रैः सुसंपन्नः प्रयात्यन्ते परां गतिम् ॥ ४८ ॥
वह्नावभ्यर्च्य गोविन्दं सितपुष्पैः सतण्डुलैः ।
आज्याक्तैरयुतं हुत्वा भस्म तन्मूर्ध्नि धारयेत् ॥ ४९ ॥
तस्यान्नादिसमृद्धिः स्यात्तद्वशे सर्वयोषितः ।
आज्यैर्लक्षं हुनेद्रक्तपद्मैर्वा मधुराप्लुतैः ॥ ५० ॥
श्रिया तस्यैन्द्रमैश्वर्यं तृणलेशायते ध्रुवम् ।
शुक्लादिवस्त्रलाभाय शुक्लादिकुसुमैर्हुनेत् ॥ ५१ ॥
त्रिमध्वक्तैर्दशशतमाज्याक्तैर्वाष्टसंयुतम् ।
क्षौद्रसिक्तैः सितैः पुष्पैरष्टोत्तरसहस्रकम् ॥ ५२ ॥
हुनेन्नित्यं यः स मासात्पुरोधा नृपतेर्भवेत् ।
दशाष्टादशवर्णोक्तजपध्यानहुतादिकम् ॥ ५३ ॥
विदध्यात्कर्म वानेन ताभ्यामप्यत्र कीर्तितम् ।
श्रीशक्तिस्मरकृष्णाय गोविन्दाय शिरो मनुः ॥ ५४ ॥
रव्यर्णो ब्रह्मगायत्रीकृष्णर्ष्यादिरथास्य तु ।
बीजैस्त्रिवेदयुग्माणैँरङ्गषट्कमुदाहृतम् ॥ ५५ ॥
विंशत्यर्णोदितजपध्यानहोमार्चनक्रियाः ।
मन्त्रोऽयं सकलैश्वर्यकाङ्क्षिभिः सेव्यतां बुधैः ॥ ५६ ॥
श्रीशक्तिकामपूर्वोऽङ्गजन्मशक्तिरमान्तिकः ।
दशाक्षरः स एवादौ स्याच्चेच्छक्तिरमायुतः ॥ ५७ ॥
मन्त्रौ विकृतिरव्यर्णावाचक्राद्यङ्गिनाविमौ ।
विंशत्यर्णोक्तयजनविधी ध्यायेदथाच्युतम् ॥ ५८ ॥

---

[1] 'वृतम्' क. पाठः ।

वरदाभयहस्ताभ्यां श्लिष्यन्तं स्वाङ्कगे प्रिये ।
पद्मोत्पलकरे ताभ्यां श्लिष्टं चक्रवरोज्ज्वलम् ॥ ५९ ॥
दशलक्षं जपेदाज्यैस्तावत्साहस्रहोमतः ।
सिद्धाविमौ मनू सर्वसंपत्सौभाग्यदौ नृणाम् ॥ ६० ॥
मारशक्तिरमापूर्वः शक्तिश्रीमारपूर्वकः ।
श्रीशक्तिमारपूर्वश्च दशार्णो मनवस्त्रयः ॥ ६१ ॥
एतेषां मन्त्रवर्य्याणामङ्गर्ष्यादि दशार्णवत् ।
शङ्खचक्रधनुर्बाणपाशाङ्कुशधरोऽरुणः ॥ ६२ ॥
वेणुं धमन् धृतं दोर्भ्यां ध्येयः कृष्णो दिवाकरे ।
आद्ये मनौ ध्यानमेवं द्वितीये विंशदर्णवत् ॥ ६३ ॥
दशार्णवत् तृतीयेऽङ्गदिक्पालाद्यैः समर्चना ।
पञ्चलक्षं जपेत् तावदयुतं पायसैर्हुनेत् ॥ ६४ ॥
ततः सिद्ध्यन्ति मनवो नृणां संपत्तिकामदाः ।
अष्टादशार्णो मारान्तो मनुः सुतधनप्रदः ॥ ६५ ॥
ऋष्याद्यष्टादशार्णोक्तं मारारूढस्वरैः क्रमात् ।
अङ्गान्यस्य मनोरङ्गदिक्पालाद्यैः समर्चना ॥ ६६ ॥
पाणौ पायसपक्कमाहितरसं बिभ्रन्मुदा दक्षिणे
सव्ये शारदचन्द्रमण्डलनिभं हैयङ्गवीनं दधत् ।
कण्ठे कल्पितपुण्डरीकनखसदुद्दामदीप्तिं वहन्
देवो दिव्यदिगम्बरो दिशतु नः सौख्यं यशोदाशिशुः ॥ ६७ ॥
दिनशोऽभ्यर्च्य गोविन्दं द्वात्रिंशल्लक्षमानतः ।
जप्त्वा दशांशं जुहुयात् सिताज्येन पयोऽन्धसा ॥ ६८ ॥
पद्मस्थं देवमभ्यर्च्य तर्पयेत् तन्मुखाम्बुजे ।
क्षीरेण कदलीपक्कैर्दध्ना हैयङ्गवेन च ॥ ६९ ॥

सुतार्थी तर्पयेद् देवं वत्सराल्लभते सुतम् ।
यद्यदिच्छति तत्सर्वं तर्पणादेव सिद्ध्यति ॥ ७० ॥
वाग्भवं कामबीजं च कृष्णाय भुवनेश्वरी ।
गोविन्दाय रमागोपीजनवल्लभङेशिरः ॥ ७१ ॥
चतुर्दशस्वरोपेतः शुक्रः सर्गी तदूर्ध्वतः ।
द्वाविंशत्यक्षरो मन्त्रो वागीशत्वप्रदायकः ॥ ७२ ॥
अष्टादशार्णवत्सर्वमङ्गर्ष्यादिकमस्य तु ।
पूजा च विंशत्यर्णोक्ता प्रतिपत्तिस्तु कथ्यते ॥ ७३ ॥
वामोर्ध्वहस्ते दधतं विद्यासर्वस्वपुस्तकम् ।
अक्षमालां च दक्षोर्ध्वे स्फाटिकीं मातृकामयीम् ॥ ७४ ॥
शब्दब्रह्ममयं वेणुमधः पाणिद्वयेऽङ्कितम् ।
गायन्तं पीतवसनं श्यामलं कोमलच्छविम् ॥ ७५ ॥
बर्हिबर्हकृतोत्तंसं सर्वज्ञं सर्ववेदिभिः ।
उपासितं मुनिगणैरुपतिष्ठेद्धरिं सदा ॥ ७६ ॥
ध्यात्वैवं प्रमदावेशविलासं भुवनेश्वरम् ।
चतुर्लक्षं जपेन्मन्त्रममुं मन्त्री सुसंयतः ॥ ७७ ॥
पलाशपुष्पैः स्वाद्वक्तैश्चत्वारिंशत्सहस्रकम् ।
जुहुयात् कर्मणानेन मनुः सिद्धो भवेद् ध्रुवम् ॥ ७८ ॥
योऽस्मिन् निष्णातधीर्मन्त्री वर्तते वक्त्रगह्वरात् ।
गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् ॥ ७९ ॥
सर्ववेदेषु शास्त्रेषु सङ्गीतेषु च पण्डितः ।
संपत्तिं परमां लब्ध्वा चान्ते यायात् परं पदम् ॥ ८० ॥
तारं हृद्भगवान् ङेऽन्तो नन्दपुत्रपदं तथा ।
नन्दान्ते वपुषेऽस्थ्यग्निमायान्ते दशवर्णकः ॥ ८१ ॥

अष्टाविंशत्यक्षरोऽयं ब्रुवे द्वात्रिंशदक्षरम् ।
नन्दपुत्रपदं ङेऽन्तं श्यामलाङ्गपदं तथा ॥ ८२ ॥
तथा बालवपुः कृष्णगोविन्दौ दशवर्णकः ।
अनयोर्नारद ऋषिश्छन्द उष्णिगनुष्टुभौ ॥ ८३ ॥
आचक्राद्यैरङ्गमङ्गदिक्पालाद्यैस्तु पूजनम् ।
दक्षिणे रत्नचषकं वामे सौवर्णवेत्रकम् ॥ ८४ ॥
करे दधानं देवीभ्यामाश्लिष्टं चिन्तयेद्धरिम् ।
जपेल्लक्षं मनुवरौ पायसैरयुतं हुनेत् ॥ ८५ ॥
एवं सिद्धमनुर्मन्त्री त्रैलोक्यैश्वर्यभाग् भवेत् ।
तारं श्रीशक्तिबीजाढ्यं नमो भगवते पदम् ॥ ८६ ॥
नन्दपुत्रपदं ङेऽन्तं भूधरो मुखवृत्तयुक् ।
मांसान्ते वपुषे मन्त्र ऊनविंशाक्षरात्मकः ॥ ८७ ॥
ऋषिर्ब्रह्मानुष्टुप् छन्दस्तथान्यदुदितं समम् ।
अयं च सर्वसंपत्तिसिद्धये सेव्यतां मनुः ॥ ८८ ॥
तारं हृद्भगवान् ङेऽन्तो रुक्मिणीवल्लभस्तथा ।
शिरोऽन्तः षोडशार्णोऽयं रुक्मिणीवल्लभाह्वयम् ॥ ८९ ॥
सर्वसंपत्प्रदो मन्त्रो नारदोऽस्य मुनिः स्मृतः ।
छन्दोऽनुष्टुब् देवता च रुक्मिणीवल्लभो हरिः ॥ ९० ॥
एकदृग्वेदमुनिदृग्वर्णैरस्याङ्गपञ्चकम् ।

तापिच्छच्छविरङ्कगां प्रियतमां स्वर्णप्रभामम्बुज-
प्रोद्यद्वामभुजां स्ववामभुजया श्लिष्यन् सचिन्ताश्मना ।
श्लिष्यन्तीं स्वयमन्यहस्तविलसत्सौवर्णवेत्रश्रियं
पायाद्वोऽसनसूनपीतवसनो नानाविभूषो हरिः ॥ ९१ ॥

ध्यात्वैवं रुक्मिणीनाथं जपेल्लक्षमिमं मनुम् ।
अयुतं जुहुयात्पद्मैररुणैर्मधुराप्लुतैः ॥ ६२ ॥
अर्चयेन्नित्यमङ्गैस्तं नारदाद्यैर्दिशाधिपैः ।
वज्राद्यैरपि धर्मार्थकाममोक्षाप्तये नरः ॥ ६३ ॥
लीलादण्डधरो गोपीजनसंसक्तदोःपदम् ।
दण्डान्ते बालरूपेति मेघश्यामपदं ततः ॥ ६४ ॥
भगवन् विष्णुरित्युक्तो वह्निजायान्तको मनुः ।
एकोनत्रिंशदर्णोऽस्य मुनिर्नारद ईरितः ॥ ६५ ॥
छन्दोऽनुष्टुब् देवता च लीलादण्डधरो हरिः ।
मन्वब्धिकरणाग्न्यब्धिवर्णैरङ्गक्रिया मता ॥ ६६ ॥

संमोहयन्निजकवामकरस्थलीला-
दण्डेन गोपयुवतीः पुरसुन्दरीश्च ।
दिश्यान्निजप्रियसखांसगदक्षहस्तो
देवः श्रियं निहतकंस उरुक्रमो वः ॥ ६७ ॥

ध्यात्वैवं प्रजपेल्लक्षमयुतं तिलतण्डुलैः ।
त्रिमध्वक्तैर्हुनेदङ्गं दिक्पालाद्यैः समर्चना ॥ ६८ ॥
लीलादण्डहरिं यो वै भजते नित्यमादरात् ।
स पूज्यते सर्वलोकैस्तं भजेदिन्दिरा सदा ॥ ६९ ॥
त्रयोदशस्वरोपेतः शार्ङ्गी मेदः सकेशवः ।
तथा मांसयुगं भाय शिरः सप्ताक्षरो मनुः ॥ १०० ॥
आचक्राद्यैरङ्गक्लृप्तिर्नारदोऽस्य मुनिः स्मृतः ।
छन्द उष्णिग् देवता च गोवल्लभ उदाहृतः ॥ १०१ ॥

ध्येयोऽच्युतः स कपिलागणमध्यसंस्थ-
स्तमाह्वयन् विदधदक्षिणदोष्णि वेणुम् ।

पाशं सयष्टिमपरत्र पयोदलीलः
पीताम्बरोऽहिरिपुपिच्छकृतावतंसः ॥ १०२ ॥
मुनिलक्षं जपेदेनं हुनेत् सप्तसहस्रकम् ।
गोक्षीरैरङ्गदिक्पालम[1]ध्येऽर्च्य गोगणाष्टकम् ॥ १०३ ॥
अष्टोत्तरसहस्रं यः पयोभिर्दिनशो हुनेत् ।
पक्षात्स गोगणैराढ्यो दशार्णेनैव वा विधिः ॥ १०४ ॥
सलवो वासुदेवो हृन्ङेऽन्तं च भगवत्पदम् ।
श्रीगोविन्दपदं तद्वद् द्वादशार्णोऽयमीरितः ॥ १०५ ॥
मनुर्नारदगायत्रीकृष्णर्ष्यादिरथाङ्गकम् ।
एकाक्षिवेदभूतार्णैः समस्तैरपि कल्पयेत् ॥ १०६ ॥
वन्दे कल्पद्रुमूलाश्रितमणिमयसिंहासने संनिविष्टं
नीलाभं पीतवस्त्रं करकमललसच्छङ्खवेत्रं मुरारिम् ।
गोभिः सप्रस्रवाभिर्वृतममरपतिप्रौढहस्तस्थकुम्भ-
प्रच्योतत्सौधधारास्नपितमभिनवाम्भोजपत्राभनेत्रम् ॥ १०७ ॥
एवं ध्यात्वाच्युतं जप्त्वा रविलक्षं हुनेत्ततः ।
दुग्धैर्द्वादशसाहस्रं दिनशोऽमुं समर्चयेत ॥ १०८ ॥
गोष्ठे प्रतिष्ठितं वात्मगेहे वा प्रतिमादिषु ।
समस्तपरिवारार्चास्ताः पुनर्विष्णुपार्षदाः ॥ १०९ ॥
द्वारे ग्रावणि पीठेऽर्च्याः पक्षीन्द्रश्च तदग्रतः ।
चण्डप्रचण्डौ प्राग् धातृविधातारौ च दक्षिणे ॥ ११० ॥
जयः सविजयः पश्चाद्बलः प्रबल उत्तरे ।
ऊर्ध्वे द्वारश्रियं चेष्ट्वा द्वार्यैतान् युग्मशोऽर्चयेत् ॥ १११ ॥
पूज्यो वास्तुः पुमांस्तत्र तत्र द्वाःपीठमध्यतः ।
द्वारान्तः पार्श्वयोरर्च्या गङ्गा च यमुना नदी[2] ॥ ११२ ॥

---

१ 'भ्यर्च्य' क. पाठः । २ 'निधी' क. पाठः ।

कोणेषु विघ्नं दुर्गां च वाणीं क्षेत्रेशमर्चयेत् ।
अर्चयेद्वास्तुपुरुषं वेश्ममध्ये समाहितः ॥ ११३ ॥
तारं शार्ङ्गपदं ङेऽन्तं सपूर्वं च [1]शरासनम् ।
हुंफड्नतीरप्युक्त्वास्त्रमुद्रयाग्रस्थितो हरेः ॥ ११४ ॥
पुष्पाक्षतं क्षिपेद् दिक्षु समाहितासने ततः ।
विधेयमेतत्सर्वत्र स्थापितेषु विशेषतः ॥ ११५ ॥
आत्मार्चनान्तं कृत्वाथ गुरुपङ्क्तीः पुरोक्तवत् ।
श्रीगुरून् परमाद्यांश्च महास्मत्सर्वपूर्वकान् ॥ ११६ ॥
तत्पादुका नारदादीन् पूर्वसिद्धाननन्तरम् ।
ततो भागवतांश्चेष्ट्वा विघ्नं दक्षिणतोऽर्चयेत् ॥ ११७ ॥
पूर्ववत् पीठमभ्यर्च्य श्रीगोविन्दमथार्चयेत् ।
रुक्मिणीं सत्यभामां च पार्श्वयोरिन्द्रमग्रतः ॥ ११८ ॥
पृष्ठतः सुरभिं चेष्ट्वा केसरेष्वङ्गदेवताः ।
अर्च्या हृदादिवर्मान्ता दिक्ष्वस्त्रं कोणकेषु च ॥ ११९ ॥
कालिन्दीरोहिणीनाग्नजित्याद्याः षट् च शक्तयः ।
दलेषु पीठकोणेषु दामाद्यर्च्यास्तु किंकिणी ॥ १२० ॥
दामादीन् यष्टिवेणुं च पुरः श्रीवत्सकौस्तुभौ ।
अग्रतो वनमालां च दिक्ष्वष्टसु ततोऽर्चयेत् ॥ १२१ ॥
पाञ्चजन्यं गदां चक्रं वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च सगोगोपालगोपिकाः ॥ १२२ ॥
इन्द्राद्यान् कुमुदाद्यांश्च विष्वक्सेनं तथोत्तरे ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ १२३ ॥
शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ।
एककालं द्विकालं वा त्रिकालं वेति गोष्ठगम् ॥ १२४ ॥

---

१ 'शरं तथा' क. पाठः ।

श्रीगोविन्दं यजेन्नित्यं गोपीभ्यश्च रसप्रदम् ।
दीर्घजीवी निरातङ्को धेनुधान्यधनादिभिः ॥ १२५ ॥
पुत्रैर्मित्रैरिहाढ्योऽन्ते प्रयाति परमं पदम् ।
ऊर्ध्वदन्तयुतः शार्ङ्गी चक्री दक्षिणकर्णयुक् ॥ १२६ ॥
मांसनाथाय नत्यन्तो मूलमन्त्रोऽष्टवर्णकः ।
ऋषिर्ब्रह्मास्य गायत्री च्छन्दः कृष्णश्च देवता ॥ १२७ ॥
वर्णयुग्मैः समस्तेन प्रोक्तं स्यादङ्गपञ्चकम् ।

पञ्चवर्षमतिदृप्तमङ्गने
धावमानमलकाकुलेक्षणम् ।
किङ्किणीवलयहारनूपुरै-
रञ्चितं स्मरत गोपबालकम् ॥ १२८ ॥

ध्यात्वैवं प्रजपेदष्टलक्षं तावत्सहस्रकम् ।
जुहुयाद् ब्रह्मवृक्षोत्थसमिद्भिः पायसेन वा ॥ १२९ ॥
प्रासादे स्थापितं कृष्णममुना नित्यमर्चयेत् ।
द्वारपूजादिपीठार्चनान्तं कृत्वोक्तमार्गतः ॥ १३० ॥
मध्येऽर्चयेद्धरिं दिक्षु विदिक्ष्वङ्गानि च क्रमात् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ १३१ ॥
रुक्मिणी सत्यभामा च लक्ष्मणा जाम्बवत्यपि ।
दिग्विदिक्ष्वर्चयेदेतानिन्द्रवज्रादिकान् बहिः ॥ १३२ ॥
योऽमुं मन्त्रं जपेन्नित्यं विधिनाभ्यर्चयन् हरिम् ।
स सर्वसंपत्संयुक्तो नित्यं शुद्धपदं व्रजेत् ॥ १३३ ॥
तारश्रीशक्तिमारान्ते श्रीकृष्णाय पदं वदेत् ।
श्रीगोविन्दाय तस्योर्ध्वं श्रीगोपीजन इत्यपि ॥ १३४ ॥
वल्लभाय ततस्त्रिः श्रीं सिद्धगोपालको मनुः ।
माधवीमण्डपासीनौ गरुडेनाभिपालितौ ॥ १३५ ॥

दिव्यक्रीडासु निरतौ रामकृष्णौ स्मरञ्जपेत् ।
चक्री वसुस्वरयुतः सर्ग्येकार्णो मनुर्मतः ॥ १३६ ॥
कृष्णेति द्व्यक्षरः कामपूर्वस्त्र्यर्णः स एव तु ।
स एव चतुर्वर्णः स्यात् ङेऽन्तोऽन्यश्चतुरक्षरः ॥ १३७ ॥
वक्ष्यते पञ्चवर्णः स्यात्कृष्णाय नम इत्यपि ।
कृष्णायेति स्मरद्वन्द्वमध्ये पञ्चाक्षरोऽपरः ॥ १३८ ॥
गोपालायाग्निजायाभ्यां षडक्षर उदाहृतः ।
कृष्णाय स्मरबीजाद्यो वह्निजायान्तिकोऽपरः ॥ १३९ ॥
षडक्षरः प्रागुदितः कृष्णगोविन्दकौ पुनः ।
सचतुर्थी सप्तवर्णः सप्तार्णोऽन्यः पुरोदितः ॥ १४० ॥
श्रीशक्तिमारकृष्णायमारः सप्ताक्षरो मनुः ।
कृष्णगोविन्दकौ ङेन्तौ स्मराद्यावष्टवर्णकः ॥ १४१ ॥
दधिभक्षणङेवह्निजायाभिरपरोऽष्टकः ।
सुप्रसन्नात्मने प्रोक्तो नम इत्यपरोऽष्टकः ॥ १४२ ॥
प्राक्प्रोक्तो मूलमन्त्रश्च नवार्णः स्मरसंयुतः ।
कृष्णगोविन्दकौ ङेन्तौ नमोन्तोऽन्यो नवार्णकः ॥ १४३ ॥
क्लींग्लौंक्लींश्यामलाङ्गाय नमः स्याद् दशवर्णकः ।
शिरोन्तो बालवपुषे कृष्णायान्यो मनुर्मतः ॥ १४४ ॥
शिरोन्तो बालवपुषे क्लींकृष्णाय स्मृतो बुधैः ।
एकादशाक्षरो मन्त्र एतेषां नारदो मुनिः ॥ १४५ ॥
छन्दस्तु देवी गायत्री देवता कृष्ण ईरितः ।
कलषद्दीर्घकैरङ्ग[1]न्यथामुं चिन्तयेद्धरिम् ॥ १४६ ॥

अव्याद् व्याकोषनीलाम्बुजरुचिररुणाम्भोजनेत्रोऽम्बुजस्थो
बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः ।

---

१ 'ङ्गम' क. पाठः ।

दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो
गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूषश्चिरं वः ॥ १४७ ॥
ध्यात्वैवमेकमेतेषां लक्षं जप्यान्मनुं ततः ।
सर्पिःसितोपलोपेतैः पायसैरयुतं हुनेत् ॥ १४८ ॥
तर्पयेत् तावदेतेषां मनूनां हुतसंख्यया ।
तर्पणं विहितं नित्यं योऽर्चयेत् सुसमाहितः ॥ १४९ ॥
वह्न्यादीशान्तमङ्गानि हृदादिकवचान्तिकम् ।
अर्चयेत् पुरतो नेत्रम(न्त्रं ? स्त्र)दिक्षु बहिः पुनः ॥ १५० ॥
इन्द्रवज्रादिकाः पूज्याः सपर्यैषां समीरिता ।
इत्येकमेषां मन्त्राणां भजेद्यो मनुवित्तमः ॥ १५१ ॥
करप्रचेयाः सर्वार्थास्तस्यासौ पूज्यते नरैः ।
सद्यःफलप्रदं मन्त्रं वक्ष्येऽन्यं चतुरक्षरम् ॥ १५२ ॥
संप्रोक्तो मारयुग्मान्तरस्थकृष्णपदेन तु ।
ऋष्याद्यमङ्गषट्कं च प्रागुक्तं प्रोक्तमस्य तु ॥ १५३ ॥
श्रीमत्कल्पद्रुमूलोद्गतकमललसत्कर्णिकासंस्थितो य-
स्तच्छाखालम्बिपद्मोदर[1]विसरदसंख्यातरत्नाभिषिक्तः ।
हेमाभः सुप्रभाभिस्त्रिभुवनमखिलं भासयन् वासुदेवः
पायद्वाः पायसादो नवनवनवतीतामृताशी वशी सः ॥ १५४ ॥
ध्यात्वैवं प्रजपेल्लक्षचतुष्कं जुहुयात् ततः ।
त्रिमध्वक्तैर्बिल्वफलैश्चत्वारिंशत्सहस्रकम् ॥ १५५ ॥
अङ्गैर्निधिभिरिन्द्राद्यैर्वज्राद्यैरर्चनोदिता ।
तर्पयेद् दिनशः कृष्णं स्वादुत्रयधिया जलैः ॥ १५६ ॥
मारयोरस्य मांसाधो रक्तं चेदपरो मनुः ।
षडङ्गान्यस्य क[2]लषड्दीर्घैर्मन्त्रशिखामणेः ॥ १५७ ॥

---

१ 'विसरसं' क. पाठः । २ 'कल्प्यानि' क. पाठः ।

आरक्तोद्यानकल्पद्रुमशिखरलसत्स्वर्णदोलाधिरूढं
गोपीभ्यां प्रेङ्ख्यमाणं विकसितनवबन्धूकसिन्दूरभासम् ।
बालं लोलालकान्तं कटितटविलसत्क्षुद्रघण्टाघटाढ्यं
वन्दे शार्दूलकामाङ्कुशलसितगदाकल्पदीप्तं मुकुन्दम् ॥ १५८ ॥

ध्यात्वैवं पूर्वक्लृप्त्यैनं जप्त्वा राजोत्पलैर्नवैः ।
मधुत्रययुतैर्हुत्वा तर्पयेत् पूर्ववद्धरिम् ॥ १५९ ॥

मधुरत्रयसंयुक्तामारक्तां शालिमञ्जरीम् ।
जुहुयान्नित्यशोऽष्टोर्ध्वशतमेकेन मन्त्रयोः ॥ १६० ॥

अस्य मण्डलतः पृथ्वी पृथ्वीशस्य कुलाकुला ।
स्याच्छालिपुञ्जपूर्णं च तद्वेश्माशु प्रजायते ॥ १६१ ॥

यश्चैतयोर्नियतमन्यतरं भजेत
मन्वोर्जपार्चनहुतादिभिरात्मभक्तितः ।
श्रीमान् स मन्मथ इव प्रमदासु वाग्मी
भूयात् तनोर्विपदि तच्च महाच्युताख्यम् ॥ १६२ ॥

इति श्रीक्रमदीपिकायां(काम्यप्रयोगान्तरतन्मन्त्रभेदनिर्णयनिरूपणं) नाम
सप्तमः पटलः ॥ ७ ॥

---

अथ

# अष्टमः पटलः ।

अथोच्यते वश्यविधिः पुरोक्त-
दशार्णतोऽष्टादशवर्णतश्च ।
स्मृत्यैव यौ सर्वजगत्प्रियत्वं
मनू मनुज्ञस्य सदा विधत्तः ॥ १ ॥

फुल्लैर्वन्यप्रसूनैरसुममलतरैरर्चयित्वा दिनादौ
नित्यं नित्यक्रियायां रतमथ दिनमध्योक्तक्लृप्त्या मुकुन्दम् ।
अष्टोपेतं सहस्रं दशलिपिमनुवर्यं जपेद्यः स मन्त्री
कुर्याद् वश्यान्यवश्यं मुखरमुखतरान्मण्डलान्मण्डलानि ॥ २ ॥

जातीप्रसूनैर्वरगोपवेशं
क्रीडारतं रक्तहयारिपुष्पैः ।
नीलोत्पलैर्गीतिरतं पुरोव-
दिष्ट्वा नृपादीन् वशयेत् क्रमेण ॥ ३ ॥

सितकुसुमसमेतैस्तण्डुलैराज्यसिक्तै-
र्दशशतमथ हुत्वा नित्यशः सप्तरात्रम् ।
कचभुवि च ललाटे भस्म तद्धारयेद् यो
वशयति युवतीः स्त्रीः सापि नॄंस्तद्वदेव ॥ ४ ॥

ताम्बूलवस्त्रकुसुमाञ्जनचन्दनाद्यं
जप्तं सहस्रतरमन्यतरेण मन्वोः ।
यस्मै दधाति मनुवित्स नरोऽस्य मङ्क्षु
स्यात् किङ्करो न खलु तत्र विचारणीयम् ॥ ५ ॥

राजद्वारे व्यवहारे सभायां
द्यूते वादे वाष्टयुक्तं शतं यः ।
जप्त्वा वाचं प्रथमामीरयेद्वै
वर्तेतासौ तत्र तत्रोपरिष्टात् ॥ ६ ॥

आसीनं मुरमथनं कदम्बमूले
गायन्तं मधुरतरं व्रजाङ्गनाभिः ।
स्मृत्वाग्नौ मधुमिलितैर्मयूरकेध्मै-
र्हुत्वासौ वशयति मन्त्रवित् त्रिलोकीम् ॥ ७ ॥

रासमध्यगतमच्युतं स्मरन्
यो जपेद् दशशतं दशाक्षरम् ।
नित्यशो झटिति मासतो नरो
वाञ्छितामभिवहेत् स कन्यकाम् ॥ ८ ॥

तुङ्गकुञ्जमधिरूढमच्युतं
या विचिन्त्य दिनशः सहस्रकम् ।
साष्टकं जपति सा हि मण्डलाद्
वाञ्छितं वरमुपैति कन्यका ॥ ९ ॥

नृत्यन्तं व्रजसुन्दरीजनकराम्भोजानि संगृह्य तं
ध्यात्वाष्टादशवर्णकं मनुवरं लक्षं जपेन्मन्त्रवित् ।
लाजानामथवा मधुद्रुततरैर्हुत्वायुतं कर्णकै-
रूढोढुं प्रजपेच्च तावदचिरादाकाङ्क्षितां कन्यकाम् ॥ १० ॥

अष्टादशाक्षरेण द्विजतरुजैस्तर्पणैस्त्रिमध्वक्तैः ।
अयुतं कुशैस्तिलैर्वा सतण्डुलैर्वशयितुं द्विजाञ्जुहुयात् ॥ ११ ॥

कृतमालभवैश्च कुरुण्टकजै-
र्नृपतीन् बकुलैश्च कुरुण्टकजैः ।

विशमत्तभवैरपि पाटलजै-
रितरानपि तद्वदथो वशयेत् ॥ १२ ॥

अभिनवैः कमलैररुणोत्पलैः
समधुरैरपि चम्पकपाटलैः ।
प्रतिहुनेदयुतं क्रमशोऽचिरद्
वशयितुं मुखजादिवराङ्गनाः ॥ १३ ॥

हयारिकुसुमैर्नवैस्त्रिमधुराप्लुतैर्नित्यशः
सहस्रमृषिवासरं प्रनिहुनेन्निशीथे बुधः ।
सुगर्वितधियं हठाद्झटिति वारयोषामसौ
करोति निजकिङ्करीं स्मरशिलीमुखैरर्दिताम् ॥ १४ ॥

कटुसंयुतैस्त्रिमधुरार्द्रतरैः
सितसर्षपैर्दशशतत्रितयम् ।
निशि जुह्वतोऽस्य तु शचीदयितो-
ऽप्यवशो वशो भवति किं न प(रैः?रे) ॥ १५ ॥

अथ बिल्वजैः फलसमित्प्रसव-
च्छदनैर्मधुद्रुततरैर्हवनात् ।
कमलैः सिता(च?घृ)तयुतैश्च···(?)
कमलां चिराय वशयेदचिरात् ॥ १६ ॥

अपहृत्य गोपवनिताम्बराण्यमा
हृदयैः कदम्बमधिरूढमच्युतम् ।
प्रजपेत् स्मरन्निशि सहस्रमानयेद्
वशमुर्वशीमपि हठाद् दशाहतः ॥ १७ ॥

बहुना किमत्र कथितेन मन्त्रयो-
रनयोः सदृङ् नहि परो वशीकृतौ ।

अपि कृष्टिकर्मणि विदग्धयोषितां
कुसुमायुधास्त्रमयवर्ष्मणोरिह ॥ १८ ॥

वन्दे कुन्देन्दुगौरं तरुणमरुणपाथोजपत्राभनेत्रं
शङ्खं चक्रं गदाब्जं निजभुजपरिघैरायतैरादधानम् ।
दिव्यैर्भूषाङ्गरागैर्नवनलिनलसन्मालया च प्रदीप्तं
द्योतत्पीताम्बराढ्यं मुनिभिरभिवृतं पद्मसंस्थं मुकुन्दम् ॥ १९ ॥

एवं ध्यात्वा पुमांसं स्फुटहृदयसरोजासनासीनमाद्यं
सान्द्राम्भोजच्छविं वा द्रुतकनकनिभं वा जपेदर्कलक्षम् ।
मन्त्रोरेकं द्वितारान्तरितमथ हुनेदर्कसाहस्रमिध्मैः
क्षीरद्रूत्थैः पयोक्तैः समधुघृतसितेनापि वा पायसेन ॥ २० ॥

ततो लोकाध्यक्षं ध्रुवचितिसदानन्दवपुषं
निजे हृत्पाथोजे भवतिमिरसंभेदमिहिरम् ।
निजैक्येन ध्यायन्नमुममलचेताः प्रतिदिनं
त्रिसाहस्र्यं जप्यात् प्रयजतु च सायाह्नविधिना ॥ २१ ॥

विधिं योऽमुं भक्त्या भजति नियतं सुस्थिरमति-
र्भवाम्भोधिं भीमं विषमविषयग्राहनिकरैः ।
तरङ्गैरुत्तुङ्गैर्जननिमृतिसमाख्यैः प्रविततं
समुत्तीर्यानन्दं व्रजति परमं धाम स हरेः ॥ २२ ॥

गृणंस्तस्य नामानि शृण्वंस्तदीयाः
कथाः संस्मरंस्तस्य रूपाणि नित्यम् ।
नमंस्तत्पदाम्भोरुहं भक्तिनम्रः
स पूज्यो बुधैर्नित्यमुक्तः स एव ॥ २३ ॥

वक्ष्ये मनुद्वयमथातिरहस्यमन्यत्
संक्षेपतो भुवनमोहननामधेयम् ।

ब्राह्मेन्द्रवामनयनेन्दुभिरादिमोऽन्य-
स्तत्पूर्वको वियदृषीकयुतेशङेह्वत् ॥ २४ ॥
मन्वोस्तु संमोहननारदो मुनि-
श्छन्दस्तु गायत्र्य[1]मुदीरितं बुधैः ।
त्रैलोक्यसंमोहनविष्णुरेतयोः
स्याद् देवता वच्म्यधुना षडङ्गकम् ॥ २५ ॥

अक्लीवकलादीर्घैः सलवैस्तदपि क्ल[2]समधिरूढैः ।
उक्तं पूर्ववदासनविन्यासान्तं समाचरेदथ तु ॥ २६ ॥
करयोः शाखासु तले न्यस्य षडङ्गानि चाङ्गुलीषु शरान् ।
मनुपुटितमातृकार्णैर्न्यस्याङ्गेऽङ्गानि विन्यसेच्च शरान् ॥ २७ ॥
कास्यहृदन्ध्वङ्घ्रिषु करशाखाभिस्तान्नमोऽन्तिकान् ङेन्तान् ।
शोषणमोहनसंदीपनतापनमादनादिकान् क्रमशः ॥ २८ ॥
पञ्चैते संप्रोक्ता द्रांद्रींक्लींब्लूंसआदिकरणाः ।
संमोहनमथ जगतां ध्यायेत्पुरुषोत्तमं समाहितधीः ॥ २९ ॥
दिव्यतरूद्यानान्तारुचिरमहाकल्पपादपाधस्तात् ।
मणिमयभूतलविलसद्रत्नपयोजन्मपीठनिविष्टस्य ॥ ३० ॥
विश्वप्राणस्योद्यत्प्रद्योतनसद्युतेः सुपर्णस्य ।
आसीनमुन्नतांसे पारिद्रुमभद्राङ्गमङ्गजोन्मथितम् ॥ ३१ ॥
चक्रदराङ्कुशपाशान् सुमनोबाणेक्षुचापकमलगदाः ।
दधतं स्वदोर्भिररुणायतविपुलविघूर्णिताक्षियुगनलिनम् ॥ ३२ ॥
मणिमयकिरीटकुण्डलहाराङ्गदकङ्कणोर्मिरसनाद्यैः ।
अरुणैर्माल्यविलेपैश्चादीप्तं पीतवस्त्रपरिधानम् ॥ ३३ ॥
निजवामोरुनिषण्णां श्लिष्यन्तीं वामहस्तधृतनलिनाम् ।
क्लिद्यद्योनिं कमलां मदनमदव्याकुलोज्ज्वलाङ्गलताम् ॥ ३४ ॥

---
१ 'त्र' क. पाठः । २ 'लासमा' क. पाठः ।

सुरुचिरभूषणमाल्यानुलेपनां सुसितवसनपरिवीताम् ।
निजमुखकमलव्यापृतचटुलासितनयनमधुकरां तरुणीम् ॥ ३५ ॥
श्लिष्यन्तं वामभुजादण्डेन दृढं धृतेक्षुचापेन ।
तज्जनितपरमनिर्वृतिनिर्भरहृदयं चराचरैकगुरुम् ॥ ३६ ॥
सुरदितिजभुजगगुह्यकगन्धर्वाद्यङ्गनाजनसहस्रैः ।
मदमन्मथालसाङ्गैरभिवीतं दिव्यभूषणोल्लसितैः ॥ ३७ ॥
स्वात्माभेदतयेत्थं ध्यात्वैकाक्षरमथाष्टवर्णं वा ।
प्रजपेद्दिनकरलक्षं त्रिमधुरसिक्तैश्च किंशुकप्रसवैः ॥ ३८ ॥
जुहुयादर्कसहस्रं विमलैः सलिलैश्च तर्पयेत्तावत् ।
विंशत्यर्णप्रोक्ते यन्त्रे दिनशोऽमुमर्चयेद् भक्त्या ॥ ३९ ॥
पीठा[१]वधौ पदयन्ते राजाय शिरोऽमुनाभिपूज्य विपम् ।
हरिमभिवाह्य स्कन्धे तस्यार्घ्याद्यैः समर्च्य धूपान्तैः ॥ ४० ॥
अङ्गानि बाणांश्च न्यासक्रमतः किरीटमपि शिरसि ।
श्रवसोश्च कुण्डलेऽरिप्रमुखानि प्रहरणानि पाणिषु ॥ ४१ ॥
श्रीवत्सकौस्तुभौ च स्तनयोरूर्ध्वे गले च वनमालाम् ।
पीतवसनं नितम्बे वामाङ्के श्रियमपि स्वबीजेन ॥ ४२ ॥
इष्ट्वाथ कर्णिकायामङ्गानि विदिग्दिशासु दिक्षु शरान् ।
कोणेषु पञ्चमं पुनरग्न्यादिदलेषु शक्तयः पूज्याः ॥ ४३ ॥
लक्ष्मीः सरस्वती च स्वर्णाभे अरुणतरे रतिप्रीत्यौ ।
कीर्तिः शान्तिश्च सिते तुष्टिः पुष्टिश्च मरकतप्रतिमे ॥ ४४ ॥
दिव्याङ्गरागमरकतभूषणमाल्यदुकूलैरलंकृताङ्गलताः ।
स्मेराननाः स्मरार्ता धृतचामरचारुकरतला एताः ॥ ४५ ॥
लोकेशा बहिरर्च्याः कथितेत्यर्चना मनुद्वयोद्धृता ।
प्रायः पुरुषोत्तमविधिरेवमिह स नोच्यते बहूक्तत्वात् ॥ ४६ ॥

---

१ 'ठाधः' क. पाठः ।

त्रैलोक्यमोहनायेत्युक्त्वा विद्महे इति स्मराय ततः ।
धीमहि पदमित्युक्त्वा तन्नो विष्णुस्तदनु प्रचोदयात् ॥ ४७ ॥
जप्यैषा जपादौ दुरितहरी श्रीकरी जपार्चाहवनैः ।
प्रोक्षयतु शुद्धिविधयेऽर्चायामनयात्मयागभूद्रव्याणि ॥ ४८ ॥
मन्वोरेकेन शतं प्रतर्पयेन्मोहिनीप्रसूनयुतैर्यः ।
तोयैर्दिनशः प्रातः स तु लभते वाञ्छितानयत्नात्कामान् ॥ ४९ ॥
हुत्वायुतं हुताशे संपाताज्येन तावदभिजप्तेन ।
भोजयतु स्वमभीकं रमणी रमणोऽपि तां स्ववशतां नेतुम् ॥ ५० ॥
अष्टादशार्णविहिता विधयः कार्याश्च वश्यकृत आभ्याम् ।
मन्वोरनयोः सदृशोऽन्यो नाशु त्रैलोक्यवश्यकर्मणि जगति ॥ ५१॥
अत्रैकार्णजपादावथवा कृष्णः सवेणुगीतिर्ध्येयः ।
अरुणरुचिराङ्गवेशः कन्दर्पो वा सपाशसृणिचापेषुः ॥ ५२ ॥
यस्त्वेकतरं मनुमेतयोर्विमलधीः सदा जपति मन्त्री ।
सोऽमुत्रेहापि च सिद्धिं विपुलामतितरामेति ॥ ५३ ॥

अथ सत्यशौरिचतृतीयतुर्यकाः
शिखिवामनेत्रशशिखण्डमण्डिताः ।
जय कृष्णयुग्मनिरन्तरात्मभू-(?)
शिखिशन्तिडास्यवृत्तसक्तवर्णकाः ॥ ५४ ॥

प्रनिमध्यगे मुदितचेतसे तत-
स्त्यपरद्(ग्मगुरु? ग्यमुख)मारुताद्वराः ।
सचतुर्थिकृष्णपदमिक्षुकार्मुको
दशवर्णकश्च मनुवर्यकस्त्वसौ ॥ ५५ ॥

सलवाधराचलसुतारमाद्यैः
पुटितं क्रमोत्क्रमगतैः समुद्गकम् ।

इति दन्तसूर्यवसुवर्ण उद्धृतः
  कवितानुरञ्जनरमाकरोऽघहृत् ॥ ५६ ॥

मुखवृत्तनन्द्युतनारदो मुनि-
  स्त्विह छन्द उक्तममृतादिका विराट् ।
त्रिजगद्विमोहनसमाह्वयो हरिः
  खलु देवतास्य मुनिभिः समीरिता ॥ ५७ ॥

वसुमित्रभूधरगजात्मदिङ्मयै-
  र्मनुवर्णकैस्त्रिपुटसंस्थितैः पृथक् ।
निजजातियुङ् निगदितं षडङ्गकं
  क्रिययैव तत्खलु जनानुरञ्जनम् ॥ ५८ ॥

अथ संविशोध्य तनुमुक्तमार्गतः
  प्रचय्य पीठमथ च स्ववर्ष्मणा ।
करयोर्दशाक्षरविधिक्रमान्न्यसेत्
  सषडङ्गसायकमनङ्गपञ्चकम् ॥ ५९ ॥

अमुना त्रिशो न्यसतु सर्वतस्तनौ
  स्मरसंपुटैस्तदनु मातृकाक्षरैः ।
दशतत्त्वकादिदशवर्णकीर्तितं
  त्वथ मूर्तिपञ्जरवसानमाचरेत् ॥ ६० ॥

सृजातिस्थिती दश षडङ्गसायकान्
  न्यसतात् ततोऽन्यदखिलं पुरोक्तवत् ।
प्रणिधाय सर्वभुवनैकसाक्षिणं
  स्मरतां मुकुन्दमनवद्यधीरधीः ॥ ६१ ॥

अथ भूधरोदरपरि( स्कृ ? ष्कृ )ते महो-
  न्नतशालगोपुरविशालवीथिके ।

घनचुम्ब्युदग्रसितसौधसंकुले
मणिहर्म्यविस्तृतकपाटवेदिके ॥ ६२ ॥
द्विजभूपविट्चरणजन्मनां गृहै-
र्विविधैश्च शिल्पिजनवेश्मभिस्तथा ।
इभसप्त्युरभ्रखरधेनुसेवितै-
श्छगलालयैश्च लसितैः सहस्रशः ॥ ६३ ॥
विविधापणाश्रितमहाजनैः कृत-
क्रयविक्रयद्रविणसंचयाचिते ।
जनमानसंहृतिविदग्धसुन्दरी-
जनमन्दिरैः सुरुचिरैश्च मण्डिते ॥ ६४ ॥
पृथुदीर्घिकाविमलपाथसि द्रव-
द्विकचारविन्दमकरन्दलम्पटैः ।
कलहंससारसरथाङ्गनामभि-
र्विहगैर्विघुष्टककुभि स्वके पुरे ॥ ६५ ॥
सुरपादपैः सुरभिपुष्पलोलुप-
भ्रमराकुलैर्विविधकामदे नृणाम् ।
शिवमन्दमारुतललच्छिखैर्वृते
मणिमण्डपे रविसहस्र(सं)श्रिते ॥ ६६ ॥
मणिदीपिकानिकरदीपितान्तरे
तनुचित्रविस्तृतवितानशालिनि ।
लसिते विकस्वरविचित्रदामभिः
[1]ससुगन्धिशीतसलिलोक्षितस्थले ॥ ६७ ॥
प्रमदाशतैर्मदविघूर्णितेक्षणै-
र्मदनालसैः करविलोलचामरैः ।

१ 'सु' क. पाठः ।

अभि(षेचि ? सेवि)ते स्खलितमञ्जुभाषितैः
स्तनभारभङ्गुरकृशावलग्नकैः ॥ ६८ ॥

अविरामचित्रमणिवर्यवर्षिणः
श्रमहानिदामृतरसच्युतोऽप्यधः ।
सुरपादपस्य मणिभूतलोल्लस-
त्पृथुसिंहवक्त्रचरणाम्बुजासने ॥ ६९ ॥

अभिचिन्तयेत् समुपविष्टमच्युतं
नवनीलनीररुहकोमलच्छविम् ।
कुटिलाग्रकुन्तललसत्किरीटकं
सितरत्नपुष्पकलितावतंसकम् ॥ ७० ॥

सुललाटमुल्लसदुदञ्चितभ्रुवं
विपुलारुणायत(वि)लोललोचनम् ।
मणिकुण्डलोस्रपरिदीप्तगण्डकं
नवबन्धुजीवकुसुमारुणाधरम् ॥ ७१ ॥

स्मितचन्द्रिकोज्ज्वलितदिङ्मुखं स्फुर-
त्प्रनवं श्रमाम्बुकणमण्डिताननम् ।
स्फुरदंशुरत्नगणदीप्तभूषणो-
त्तमहारदामभिरुपस्कृतांसकम् ॥ ७२ ॥

घनसारकुङ्कुमविलिप्तविग्रहं
पृथुदीर्घबन्धुरभुजाविराजितम् ।
तरुणारुणाब्जचरणाब्जमङ्गजो-
न्मथिताङ्गमङ्कगकराम्बुजद्वयम् ॥ ७३ ॥

स्वाङ्कस्थभीष्मकसुतोरुयुगान्तरस्थं
तां तप्तहेमरुचिमात्मकराम्बुजाभ्याम् ।

श्लिष्यन्तमर्द्रजघनामुपगृह्यमाण-
मात्मानमायतलसत्करपल्लवाभ्याम् ॥ ७४ ॥

आनन्दोद्रेकनिघ्नां मुकुलितनयनेन्दीवरां स्रस्तगात्रीं
प्रोद्यद्रोमाश्वसान्द्रश्रमजलकणिकामौक्तिकालङ्कृताङ्गीम् ।
आत्मन्या( नीय ? लीन )बाह्यान्तरकरणगणामङ्गकैर्निस्तरङ्गै-
र्मज्जन्तं लीननानामतिमतुलमहानन्दसन्दोहसिन्धौ ॥ ७५ ॥

सत्याजाम्बुवतीभ्यां दिव्यदुकूलानुलेपना( ढ्या ? )भ्याम् ।
मन्मथशरमथिताभ्यां मुखकमलालोललोचनभ्रमराभ्याम् ॥ ७६ ॥

भुजयुगलाश्लिष्टाभ्यां श्यामारुणललितकोमलाङ्गा[1]भ्याम् ।
आश्लिष्टमात्मदक्षिणवामगताभ्यां करोल्लसत्कमलाभ्याम् ॥ ७७ ॥

पृष्ठगया कलिन्दसुतया करकमलयुजा परिबद्धमञ्जुलरुचा मदन-
मथितया ।
पद्मगदारथाङ्गदरभृद्भुजयुगं दोर्द्वयसक्तवंशविलसन्मुखसरसीरुहम् ।
॥ ७८ ॥

दिक्षु बहिः श्रुतर्षियतिभिः खेचरपरिवृढैर्भक्तिभरावनम्रतनुभिः
स्तुतिमुखरमुखैः ।
सन्ततसेव्यमानममनोवचनविषयकमर्थचतुष्टयप्रदममुं त्रिभुवन-
जनकम् ॥ ७९ ॥

सान्द्रानन्दमहाब्धिमग्नममले धाम्नि स्वकेऽवस्थितं
ध्यात्वैवं परमं पुमांसमनघात् संप्राप्य दीक्षां गुरोः ।
लब्ध्वामुं मनुमादरेण सितधीर्लक्षं जपेद्योषितां
वार्ताकर्णनदर्शनादि( वि ? र )हितो मन्त्री गुरूणामपि ॥ ८० ॥

जुहुयाच्च दशांशकं हुताशे
ससिताक्षौद्रघृतेन पायसेन ।

१ 'ङ्गलताभ्याम्' क. पाठः ।

प्रथमोदितपीठवर्यकेऽमुं
प्रयजेन्नित्यमनित्यताविमुक्त्यै ॥ ८१ ॥

आरभ्य विभूतिमथ न्यासक्रमतः शरान्तमभ्यर्च्य ।
मूर्त्याद्यं चात्मानं विंशत्यर्णोदिते तु यन्त्रवरे ॥ ८२ ॥
मध्यमबीजं परितो वरुणेन्दुयमेन्द्रदिक्षु संलिख्य ।
बीजचतुष्कं तदपि चत्वारिंशद्भिरक्षरैर्ह्यधिकैः ॥ ८३ ॥
शिवहरिवह्न्याशास्त्रिषु ···क्रमाद्विलिखेत् ।
वाङ्मायाश्रीमन्त्रांस्तद्वद् रक्षोऽम्बुपानिलास्त्रिषु च ॥ ८४ ॥
शेषं पूर्वोदितवद्विधाय पीठं यथावदभ्यर्च्य ।
सङ्कल्प्य मूर्तिमन्तर्बाह्यां वार्चयतु मध्यबीजे तम् ॥ ८५ ॥
मुखदक्षसव्यपृष्ठबीजेष्वर्च्यास्तु शक्तयः क्रमशः ।
रुक्मिण्याद्याः षट्स्वथ कोणेष्वङ्गानि केसरेषु शरान् ॥ ८६ ॥
लक्ष्म्याद्या दलमध्येष्वग्न्यादिषु तद्बहिर्ध्वजप्रमुखान् ।
अग्रे केतुं श्यामं पृष्ठे विधुरिपुमरुणममलरक्तरुची ॥ ८७ ॥
पार्श्वद्वये निधीशौ सन्ततधाराभिवृष्टधनपुञ्जौ ।
हेरम्बशास्तृदुर्गावि(ख?ष्व)क्सेनान् विदिक्षु वह्न्याद्यम् ॥ ८८ ॥
विद्रुममरकतदूर्वास्वर्णाभान् बहिरथेन्द्रवज्राद्यान् ।
यजतु विधानमितीरितमावृतिसप्तकयुतं मुकुन्दस्य ॥ ८९ ॥

इत्यर्चयन्नच्युतमादरेण
योऽमुं भजेन्मन्त्रवरं जितात्मा ।
सोऽभ्यर्च्यते दिव्यजनैर्जनानां
हृन्नेत्रपङ्केरुहतिग्मभानुः ॥ ९० ॥

सितशर्करोत्तरपयःप्रतिपत्त्या
परितर्पयेद् दिनमुखे दिनशस्तम् ।

सलिलैः शतं शतमखश्रियमेव
स्वविभूत्युदन्वति करोत्युदबिन्दुम् ॥ ९१ ॥

विदलाकुलैः सुमनसः सुमनोभि-
र्घनसारचन्दनघनद्रवमग्नैः ।
मनुनामुना हवनतोऽयुतसंख्यं
त्रिजगत्प्रियः स मनुवित् कविराट् स्यात् ॥ ९२ ॥

ध्यानादेवास्य सद्यस्त्रिदशमृगदृशो वश्यतां यान्त्यवश्यं
कन्दर्पार्ता जपाद्यैः किमथ न सुलभं मन्त्रतः स्यान्नरस्य ।
स्पर्धामुद्धूय चित्रं महदिदमपि नैसर्गिकीं शश्वदेतं
सेवेते मन्त्रिमुख्यं सरसिजनिलया चापि वाचामधीशा ॥ ९३ ॥

आधिव्याधिजरापमृत्युदुरितैर्भूतैः समस्तैर्विषै-
र्दौर्भाग्येन दरिद्रतादिभिरसौ दूरं विमुक्तश्चिरम् ।
सत्पुत्रैः ससुतैश्च मित्रनिवहैर्जुष्टोऽ(भि?ब)लाभिः सदा
संपद्भिः परिपुष्ट ईडितयशा जीवेदनेकाः समाः ॥ ९४ ॥

अखिलमनुषु म(न्त्रो?न्त्रा)वैष्णवा वीर्यवन्तो
महिततरफलाढ्यास्तेषु गोपालमन्त्राः ।
प्रबलतर इहैषोऽमीषु संमोहनाख्यो
मनुरनुपमसंपत्कल्पनाकल्पशाखी ॥ ९५ ॥

मनुमिममतिहृद्यं यो भजेद् भक्तिनम्रो
जपहुतयजनाद्यैर्ध्यानवान् म(न्त्र?न्त्रि)मुख्यः ।
त्रुटितसकलकर्मग्रन्थिरुद्बुद्धचेता
व्रजति स तु पदं तन्नित्यशुद्धं मुरारेः ॥ ९६ ॥

अङ्गीकृत्यैकमेषां मनुमथ जपहोमार्चनान्तैर्मनूना-
मष्टाङ्गोत्सादितारिः प्रमुदितपरिशुद्धप्रसन्नान्तरात्मा ।

योगी युञ्जीत योगाननु[१]चितविहृतिस्वप्नबोधाहृतिः प्रा-
गास्यः सन्नासने स्वे सुमृदुनि सुखसंमीलिताक्षो निषण्णः ॥ ९७ ॥
विश्वं भूतेन्द्रियान्तःकरणमयमिनेन्द्वग्निरूपं समस्तं
वर्णान्ते तत्प्रधाने कलनयनमये बीजरूपे ध्रुवेण ।
नीत्वा तत्पुंसि बिन्द्वात्मनि तमपि परात्मन्यथो कालतत्त्वे
तच्च च्छक्तौ चिदात्मन्यपि लयतु च तं केवलेधाम्नि शान्ते ॥ ९८ ॥
निर्द्वन्द्वे निर्विशेषे निरतिशयमहानन्दसान्द्रेऽवसानो-
पेतेऽथो कृष्णपूर्वां मनुमहितगिरं शाश्वतेऽप्यात्मनीत्थम् ।
संहृत्याभ्यस्य बीजोत्तममथ[२]सकले लीननिःश्वासचेताः
प्रक्षीणापुण्यपुण्यो निरुपमपरसंवित्स्वरूपः स भूयात् ॥ ९९ ॥
मूलाधारे त्रिकोणे तरुणतरणिभाभास्वरे विभ्रमन्तं
कामं बालार्ककालानलज[३]ठकुरङ्गाङ्ककोटिप्रभाभम् ।
विद्युन्मालासहस्रद्युतिरुचिरलसद्बन्धुजीवाभिरामं
त्रैगुण्याक्रान्तबिन्दुं जगदुदयलयैकान्तहेतुं विचिन्त्य ॥ १०० ॥
तस्योर्ध्वे विस्फुरन्तीं स्फुटरुचिरतडित्पुञ्जभास्वत्स्वभावा-
मुद्गच्छन्तीं सुषुम्णासरणिमनुशिखामाललाटेन्दुबिम्बम् ।
चिन्मात्रां सूक्ष्मरूपां कलितसकल···श्वाङ्कथानादगम्यां(?)
मूलं या सर्वधाम्नां स्मरतु निरुपमां हुंकृतोदञ्चिताम्बाम् ॥ १०१ ॥
नीत्वा तां शनकैरधोमुखसहस्रारारुणाब्जोदरे
द्योतत्पूर्णशशाङ्कबिम्बमनुतः पीयूषधारास्रुतिम् ।
रक्तां मन्त्रमयीं निपीय च सुधानिःस्यन्दरूपां विशेद्
भूयोऽप्यात्मनिकेतनं पुनरपि प्रोत्थापयेत्त्वा[४]विशेत् ॥ १०२ ॥
योऽभ्यस्येदनुदिनमेवमात्मनोऽन्त-
र्बीजेशं दुरितजरापमृत्युरोगान् ।

१ 'दि' क. पाठः । २ 'शकलैर्नील' क. पाठः । ३ 'जठर' क. पाठः । ४ 'यित्वा' क. पाठः ।

जित्वासौ स्वयमिव मूर्तिमाननङ्गः
संजीवेच्चिरमलिनीलकेशपाशः ॥ १०३ ॥
स्फुटमधुरपदार्णश्रेणिरत्यद्भुतात्मा
झटिति वदनपद्मान्निःसरत्यस्य वाणी ।
अपि च सकलमन्त्रास्तस्य सिध्यन्ति मङ्क्षु
व्युपरमघनसौख्यैकास्पदं वर्तते सः ॥ १०४ ॥
भ्राम्यन्मूर्तिं मूलचक्रादनङ्गं
स्वाभिर्भाभी रक्तपीयूष(स्रप्तिः ? स्रुद्भिः) ।
बिम्बाकाशं पूरयन्तं विचिन्त्य
प्रत्यावेश्यास्तत्र व[1]श्याय साध्याः ॥ १०५ ॥
नार्यो नरा वा नगरी सभापि वा
प्रवेशितास्तत्र निशातचेतसा ।
स्युः किंकरास्तस्य झटित्यनारतं
चिराय तन्निघ्नधियो न संशयः ॥ १०६ ॥
तरणिदल(न ? स) नाथे शक्र[2]गोपारुणेऽथो
रविशशिशिखिबिम्बप्रस्फुरच्चारुमध्ये ।
हृदयसरसिजेऽमुं श्यामलं कोमलाङ्गं
सुमुखमुपनिविष्टं संस्मरेद् वासुदेवम् ॥ १०७ ॥
पादाम्भोजद्वयेऽङ्गुल्यमलकिसलये चा[3]वनौ सन्नखानां
सत्कूर्मोदारकान्तौ प्रपदयुजि लसज्जङ्घिकादण्डयोश्च ।
जान्वोरूर्वोः पिशङ्गे नववसनवरे मेखलादाम्नि नाभौ
रोमावल्यामुदारोदरभुवि विपुले वक्षसि प्रौढहारे ॥१०८॥
श्रीवत्से कौस्तुभे च स्फुटकमललसद्बद्धसद्दाम्नि बाहो-
र्मूले कीयूरदीप्ते जगदवनपटौ दोर्द्वये कङ्कणाढ्ये ।

---

१ 'वैश्या' क. पाठः । २ 'शत्रु' क. पाठः । ३ 'ष्वा' क. पाठः ।

पाणिद्वन्द्वाङ्गुलिस्थे सुमधुररवसंलीनविश्वे च वेणौ
कण्ठे सत्कुण्डलोस्रस्फुटरुचिरकपोलस्थलद्वन्द्वके च ॥१०९॥
कर्णद्वन्द्वेऽथ घोणे नयननलिनयोर्भ्रूविलासे ललाटे
केशेष्वालोलबर्हेष्वतिसुरभिमनोज्ञप्रसूनोज्ज्वलेषु ।
शोणे विन्यस्तवेणावधरकिसलये दन्तपङ्क्त्यां स्मिताख्य-
ज्योत्स्नायामादिपुंसः क्रमत इति शनैः स्वंमनः संविधत्ताम् ॥११०॥
यावन्मनो विलयमेति हरेरुदार-
मन्दस्मिते जपतु तावदनङ्गबीजम् ।
अष्टादशार्णमथवापि दशार्णकं वा
मन्त्रं शनैरथ समाहितमातरिश्वा ॥ १११ ॥
आरोप्यारोप्य मनः पादारविन्दादिह स्मि[1]तान्तम् ।
अत्र विलाप्य क्षीणचेतसि सुखचित्सदात्मको भवति ॥११२॥
जपपूजाहोमतर्पणमन्त्राभिषेकविनियोगानाम् ।
दीपिकेयं मयोद्भास्यते क्रमतः कृष्णमन्त्रगदितानाम् ॥ ११३ ॥
संशयतिमिरच्छि(द्र ? दु)रा चैषा क्रमदीपिका करेण महद्भिः ।
करदीपिकेव धार्या(स्व ? स)स्नेहमहर्निशं समस्तसुखावाप्त्यै ॥ ११४
यश्चक्र[2] निजकेलिसाधनमधिष्ठानस्थितोऽपि प्रभुः
प्रत्तं मन्मथशत्रुणा रणकृतौ व्याकृत्य लोकातिगम् ।
धत्ते दीप्तनवेन्दुभाननमघोपेतात्तमायं ध्रुवं
वन्दे का[3]लियमर्दनस्वधःकृ(?)तं भुक्तद्युकं यादवम् ॥ ११५ ॥
गोप्यङ्के लुठनपरं विलूनपाप-
मुर्वीशं मुदमदपदमह्नः कृषीष्ठाः(?) ।
यद्देवेशितुरपनेतृभीतमेति
तीतिग्मांशोर्नृपतेः परेषु याति(?) ॥ ११६ ॥

१ 'सिता' क. पाठः । २ 'क्रान्ति' ख. पाठः । ३ 'कायविम' ख. पाठः ।

जगदिदमनुविद्धं येन यस्मिन्[1] प्रसूते
यदनु ततमजस्रं पाति चाधिश्रितो यः ।
यदुरुमहदुदर्चिर्यद्बिभर्त्ति च गोपी
तममृतसुखबोधज्योतिषं नौमि कृष्णम् ॥ ११७ ॥

इति श्रीक्रमदीपिकायां (वश्यादिप्रयोगविधाननिरूपणं) नाम
अष्टमः पटलः समा(प्ता ? प्तः) ॥ ८ ॥

समाप्तोऽयं ग्रन्थः शुभमस्तु ॥

---

१ 'यस्मात्' क- पाठः ।